कगलमध्यगमनम् । तत्रास्ति कश्चन मत्स्यराजः द्वारपालकः । तेन सह युद्धं प्रवर्तते । युद्धे श्रान्तो हनुमान् मत्स्यराजं पृच्छति को भवानिति ।। स च स्वकं वृत्तान्तमेवमाह – अहं हनुमतः पुत्रः । पुरा समुद्रं हनुमान् यदा लङ्कागमनाय लङ्घयामास तदा सः अध्वश्रमायातानि शरीरस्वेदतोयानि पिण्डीकृत्य तन्मलं मध्येसमुद्रं चिक्षेप । तदा समुद्रस्थिता काचित् तिमिङ्गिला तन्मलं भुक्त्वा मामसूत । सा जननी मम । हनुमान् मम जनकः । अहमत्र पालकः । कदाचित् कमलासनः सालग्रामपूजां विदधे । तां सालग्रामशिलामूर्तिं कश्चन मूढधीः मत्स्योऽहरत् । अहं तस्य शिक्षया सालग्रामं ब्रह्मणे दत्तवान् । सोऽपि मह्यं वरानयच्छत् । मैरावणेनाहमत्र नियुक्तः । न कोऽपि मां जेतुं समर्थ इति । तदनन्तरं हनुमता चानुपूर्व्येण स्ववृत्तमभिहितम् । तव जनकः हनुमानेवाहम् । पूर्वं रामदौत्यं प्रपन्नः । इदानीं राघवहर्तारं भवन्नायकं मैरावणं मार्गितुमागतोस्मीति । तदनन्तरं तद्विस्रम्भाय विश्वरूपं प्रदर्श्य हनुमान् तस्य मत्स्यराजस्य विश्वासभाजनमभवत् । तदनन्तरं सः मत्स्यराजः – भोः तातपादाः, अज्ञानतः मया कृतमागः क्षमध्वमिति प्रणनाम । हनुमांश्च अनुपदं तमङ्के निधाय तुतोष । तदनु सः संहृतविश्वरूपं कपिवरमंसे निवेश्य कमलमध्यस्थसूक्ष्मपद्यया पातालं गत्वा गोपुरं किञ्चित् करेणास्मै प्रादर्शयत् । तत्र गमनायोपायं चाकथयत् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एवंरीत्या पावनिः मैरावणपुरं गतवान् । तत्र स्त्रीभिः शयानं मैरावणमपश्यत् । अत्र काचन चूर्णिका तं बहुधा वर्णयति । तत्र हनुमान् चिन्तावशंगतः बन्दीकृतां कृशां दुर्दण्डीनामधेयां मैरावणस्य स्वसारमपश्यत् । सा च हे वायुनन्दन अहं ब्रह्मदण्डस्य पुत्री । मैरावणः राघवाहर्ता तस्य पुत्रः । कालदण्डाय मां मत्पिता दत्तवान् । मम पुत्रोऽस्ति कश्चन नीलमेघाभिधः । कदाचिदशरीरवाणी काचन जाता । हे मैरावण, तव सुतां परिणीय नीलमेघः पातालभुवं पालयिष्यतीति । तेन क्रुद्धः मैरावणः मां भगिनीं दुर्दण्डीं मत्पतिं कालदण्डश्च कारागारे न्यक्षिपत् इति । तदनन्तरं हनुमान् दुर्दण्ड्याः उपदेशेन मैरावणपुरं प्राप्य सप्तवप्रानतिलङ्घ्य मैरावरवधार्थं दुर्गारूपिणीं पार्वतीं सम्प्रार्थ्य पद्मकबन्धरूपमेकं पद्यमभाणीत् । तच्च पद्यं स्रग्धरावृत्तरूपेण वर्तते ।

अथान्तः प्रविष्टो हनुमान् मैरावणापहृतयोः सप्तव-प्राणामन्तः कालिकालये पेटिकायां निहितयोः राघवयोः सन्दर्शनाय दर्गां स्तौति । इत्येवं दुर्दण्डीप्रदर्शितमार्गेण गत्वा राघवौ गूढं निक्षिप्तौ हनुमान् ददर्श इति पञ्चमस्तबकं राघवदर्शननामाङ्कितया उपसंजहार रघुनाथकविः ।

एवं देवीं नत्वा हनुमान् राक्षसान् हन्तुकामः सौधं क्रान्त्वा प्रलयघनवत् जगर्ज । तमशनिसमं ध्वानं श्रुत्वा

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मैरावणः संक्रुद्धः उत्थितोऽभूत् । तस्य यातुपतेः युद्धार्थं प्रस्थानकालेऽपशकुनानि सञ्जातानि । भार्यया च मातङ्ग्या निषिद्धोऽपि अतिक्रोधात् रणभूमिमागतः । अत्र काव्ये अर्थान्तरन्यासा. बहवो दृश्यन्ते । "प्रेष्याधमानां शरणं विभुर्हि" इत्यष्टमे श्लोके । एवमन्यत्रापि । तदनन्तरं मैरावणहनुमतोः महद्युद्धं प्रवर्तते । अत्र च युद्धवर्णनं मनोहरं दृश्यते ।

"गगनं यगनाकारं सागरः सागरोपमः ।
रामराबणयोर्युद्धं रामरावणयोरिव ॥" इतिवत् ।

अत्र कविः सप्तदशसङ्ख्याकचूर्णिकया युद्धं सम्यक् वर्णयति । हनुमान् युद्धे हतानां बहूनां मांसरक्तादिभिः जम्बुकान् मृगांश्चान्यान् समतर्प्सीत् । तयोः दर्शकजनावेग-जनकं जन्यमजनिष्ट । अयं सुत्रामविक्रमप्रक्रमः प्रेतराट् इति नैर्ऋतानां बुद्धिरासीत् । "भूयांसि रक्षांसि ससैनिकानि चक्रे हनुमान् यमपाशयुञ्जि ।" जिष्णुरयं हनूमान् प्रत्युद्ययौ राक्षसमुख्यमेव । नियुद्धशिल्पं चिरमाकलय्य वातिः मैरावणस्य राक्षसस्यासून् व्यचूचुरत् । अत्राशीतिसङ्ख्याका चूर्णिका काचन दुर्दण्डचा वचनप्रतिपादिका दृश्यते । "हनूमन् ! कोऽपि योगोऽस्ति शृण्वेतर्हि समाहितः, विना येन न शक्योऽयं निहन्तुं कुणपाशनः ।" पूर्वस्यामत्र काष्ठायां

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्रिंशद्योजनदूरतः गुहाभिः सप्तभिर्युक्तः वर्तते कश्चिद् धरणी-धरः । दर्यां महत्यामन्त्यायां गण्डशैलो निषीदति । मुनिसङ्ख्य-बिलानि अस्मिन् हे हरिनन्दन, तत्रयाहि । तेषु मधुव्रत-सरूपकाः अस्याधमस्य राक्षसस्य प्राणाः अंशभागेन सञ्चरन्ति । तैस्समं अयं मैरावणः मदीयभ्राता विच्छेत्तव्यः इत्युपायं दर्शयामास दुर्दण्डी । तदीयवचनात् मरुत्सुतः तथैव कृत्वा दुष्टं रावणेन प्रेरितं राघवापहर्तारं मैरावणं अन्तकालय निनाय । दुष्टनिग्रहसन्तुष्टाः सुमनसः सुमनोवृष्टिपातनं समनस्काः अकुर्वन् । एवं मैरावणवधो नाम षष्ठः स्तवकः सम्पूर्णः ।

अथ सप्तमस्तबके दौर्दण्डेयस्य नीलमेघस्य मैरावण-दुहितुः नीलकेश्याश्च परिणयनं तद्राज्यपट्टाभिषेकश्च प्रदर्श्यते । अत्र त्रयोदशसङ्ख्याका चूर्णिकाऽतिमनोहरा दृश्यते ॥ तत्र च मातङ्गी निहतं कुणपपतिमालिङ्ग्य नितरां रुरोद इति वर्णयति । मन्दोदरी रावणमिव तारा वालिनमिव अस्याः मातङ्ग्या रोदनप्रकारमपि वर्णयति । हनुमांश्च नीलमेघाय राज्यं दत्वा मत्स्याधिपाय सैन्याधिपत्यं च दिदेश । अथ हनुमान् राघवसहितां पेटिकां आदाय सूर्योदयवेलायां सुग्रीवादिसन्निधौ निचिक्षेप ॥ तत्र जयश्रिया परिष्वज्यमानं कपिभिः पूज्यमानं तालवृन्तेन वीज्यमानं मार्गश्रमेण सञ्जातकीलालकणकोरकितनिटिलभागं कौतुक-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वन्तं हनुमन्तं पश्यन्तः सुग्रीवविभीषणादयः सन्तोषपयोधौ निमग्ना अभवन् । "लक्ष्मणेन युतं रामं पर्यंतृप्यन्निशाम्य तम् । लक्ष्मणेन युतं चन्द्रं चकोरा इव मर्कटाः । यदुक्तं वायुपुत्रस्य समो नेति जगत्त्रये । तद्युक्तमेव, यतः असौ सीतां गवेषयामास, राघवौ च गवेष्य मैरावणं हत्वा स्वविक्रममद्भुतं प्रदर्शयामास । अत एव सर्वैरास्तिकैः कार्यारम्भे मारुति-प्रार्थना क्रियते ।

एवमगस्त्यप्रोक्तहनुमच्चरितनिबन्धनात्मकस्य सप्तस्तबक-रूपस्य काव्यस्य पठनेन श्रवणेन च अधीती श्रोता च बुद्धि-धैर्यगुणवान् भवेत् । स श्रियं च महतीमवाप्नुयात् ।

तदनन्तरं रघुनायकः मुदितः भक्ताग्रयायिने हनुमतेऽनर्घ-मूल्यं मुक्तासरं स्वकण्ठादुदस्य अदात् ॥

अत्र काव्ये वीरश्रीपरिवेष्टितः रघुपतेः दूतोत्तमो नायकः। वीररसः प्रधानभूतः। अन्ये शृङ्गारहास्यादयो अवयवभूताः। अत्र नीलकेश्या सह परिणयनं प्रदर्शितम् । यद्यपि मातुलसुतापरिणयः स्मृतिषु सर्वथा निषिद्धः —

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

" मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां तद्वत् त्यक्त्वा चान्द्रायणं चरेत् " इति,

अथापि अयं दाक्षिणात्यानां शिष्टोत्तमानामाचारमूलकत्वादष्टकादिस्मृतीनामिवानुमितश्रुतिमूलकत्वेन प्रमाणभूतमेव । नात्र विवदितव्यम् । अयमाचारः उत्तरदेशे नास्ति । दक्षिणदेशे परम्परया सम्प्रदायादागतो विराजते । अत्र विषये जैमिनीयपूर्वमीमांसाशास्त्रसिद्धः विवादोऽनुसन्धेयः ॥

मारुतेरुदयश्रियः प्रदर्शनपरोऽयं ग्रन्थः लक्षणया मारुतिविजयपदेनाभिधीयते । अथवा मारुतेः विजयः यस्मिन् तदिति बहुव्रीहिः द्रष्टव्यः । ग्रन्थकर्ता कुप्पाभट्टरघुनाथः रघुनन्दनपदारविन्दवन्दनकन्दलितसाहित्यसनाथः इति प्रतिस्तबकावसाने स्वयं व्यनक्ति । लोके च सर्वे प्रार्थयन्ते अष्टौ लक्ष्मीः । प्रथमतः सन्तानलक्ष्म्याः प्रार्थनम् । तदनन्तरं कुटुम्बभरणाय धान्यलक्ष्म्याः धनलक्ष्म्याश्च प्रार्थनं क्रियते । सद्बुद्धिसम्पादनाय विद्यालक्ष्मीः प्रार्थ्यते । सर्वकार्यनिष्पादनाय विजयलक्ष्मीः प्रार्थ्यते । पुनः पुनरन्तरायशतैः प्रारब्धविघ्नितकार्यस्य निर्वहणाय आफलोदयं प्रयतमानेन धैर्यलक्ष्मीः प्रार्थ्यते । एवं गजलक्ष्मीरपेक्ष्यते सर्वमङ्गलाय । अष्टमी

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सौभाग्यलक्ष्मी. सौभाग्यकामनया प्रार्थ्यते । एतासां व्यष्टि-भूतानामष्टानां लक्ष्मीणां समष्टिभूता महालक्ष्मीरित्यभि-धीयते । अनुभवसिद्धमिदं यत् एतासां लक्ष्मीणां देवालयः महोदधितीरे मद्रपुर्यां सर्वैः भक्तजनैराराध्यते । अतः विजयप्रदविजयलक्ष्मींनामाङ्कितोऽयं मारुतिविजयाख्यः ग्रन्थ-विशेषः सर्वैरादरणीयः राजते । एवं सङ्ग्रहेण अन्तर्बहिश्च निरूपणीयाः विषयाः प्रतिपादिताः ।

आबाल्यात् यच्चरणनलिनासक्त्या मम दैव्यां वाचि व्युत्पत्तिः सञ्जाता, येषां महदनुग्रहलाभेन धन्योऽहं संवृत्तः अधुना तञ्जपुरीय सरस्वतीमहाल् ग्रन्थकोशालये संस्कृतविभागे मुख्यं स्थानं तत्रत्याधिकारिणां प्रार्थनानुसारमावहन्ति, तेषां मम गुरुचरणानां श्रीश्रीकृष्णमूर्तिशास्त्रिपादानां पादारविन्दयोः प्रणामपरम्पराः समर्पयामि ।

अस्मिन् विषये शरीरश्रममविगणय्य साहाय्यं कृतवतां मद्रपुरी संस्कृतमहाविद्यालयाध्यक्षचराणां पण्डितराज – शास्त्ररत्नाकरप्रभृतिबिरुदविशेषणविभूषितानां कैलासनाथ-बालसुब्रह्मण्यशास्त्रिणां, तथा लेखनेनोपकृतवतः पि. हेच्. डि. कक्ष्याप्रविष्टस्य सुगृहीतनामधेयस्य तञ्जपुरीय श्रीकृष्णस्य च कृतज्ञातात्र निवेद्यते ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

" यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ "

इति भगवदुपदेशानुसारेण सर्वोऽयं श्रमपरिपाकः भगवते पार्वतीनाथाय सदाशिवाय समर्प्यमाणः राजतामित्याशास्ते ॥

मद्रपुरी,
14–11–91.

डा०. एन्. वीळिनाथः,
प्राचार्यः, संस्कृतविभागः,
मद्रपुरी विश्वविद्यालयः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

काव्यरचयितृकृता

## ।। मारुतिविजयकथानुक्रमणिका ।।

——x——

### ।। प्रथमस्तबककथानुक्रमणिका ।।

श्रीरामचन्द्रप्रसादेन संस्कृतमयगद्यपद्यनिर्माणसमर्थः कविः रामपादपङ्केरुहमधुकरमारुतिगुणग्रथितचित्तकुसुमः तद्विषयकं कञ्चित्प्रबन्धं प्रारं(र)भमाणो निर्विघ्नेन ग्रन्थपरि–समात्प्यर्थं, देवतानमस्कारपूर्वकमादौ मङ्गलं ततः सङ्कल्पतः श्लोकसङ्ख्यानिर्णयं निजविनयप्रकटनं कथाप्रारम्भणं (च) चकार ।

मेदिन्यामयोध्या नाम नगरी स्वर्गसदृशी काचिदस्ति । तां रघुवल्लभोऽधिवसन् राक्षसवंशदावाग्निः साधुजनहितङ्करो, रामो, नयेन भूमण्डलं पालयन् कदाचिदधिसभं सिंहासनारूढः (ढो) भ्रातृभिः (भी) राजभिः सुग्रीवविभीषणप्रभृतिभिश्च सेव्यमानः(स)तस्थौ । तदानीं रावणविजयिनं रामं दिदृक्षुरागतो भगवान् कुम्भसम्भवः पाद्यार्घ्याचमनीयादिभिस्तेन पूजितोऽभूत् । सोऽगस्त्यः प्रश्नप्रसङ्गेन विनुतहनुमत्पराक्रमाय रामाय रात्रिप्रवृत्तं मारुतिचरित्रमित्थं निखिलं निवेदयामास –

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

भवान् सकलयातुधानान् निहत्य लङ्कायां कृष्णपक्ष चतुर्दश्यां निशि श्वः (श्वो) रावणं जिगीषुः मध्येकपिसैन्यं (जिगीषुर्मध्येकपिसैन्यं) लक्ष्मणेन सह निद्रामनुबभूव । ततः पुत्रशोकखिन्नो रावणः पङ्कमग्नचरणो वारण इव कार्यान्तरमूढः (ढो) निःसहायः पाताळवासिनं मायाविनं मैरावणं नाम मित्रं कञ्चिद्राक्षसाधिपं सस्मार । ततः पूर्व-ब्रह्मत्तवरेण धुरि साक्षादाविर्भवन्तं निजविपत्कारणं पृच्छन्तं धीरधीरं सुहृत्कार्यधुरन्धरं तं प्रति धैर्येण सर्वं निगद्य त्वया मायाबलतः रामलक्ष्मणावपह्रियेते चेत् ममा समस्तकपि-(वधः) सुलभः भवेत् एवंतादृशोपकारोऽवश्यं कर्तव्य इति रावणः प्रार्थयामास । मैरावणः (ण) तथा[म] करिष्यामि त्वच्छोकमुन्मूलयिष्यामीति प्रतिज्ञाय पाताळस्थितस्वीयनगरं ययाविति कथां स्पष्टं कथितवान् प्रथमे स्तबके ॥

## ॥ द्वितीयस्तबककथानुक्रमणिका ॥

अथ मैरावणः साध्वीं शुद्धान्तगतां मातङ्गीं भार्यामेत्य कर्तव्यकार्यं विज्ञाप्य तस्या असम्मत्या प्रवृद्धकोपो राघवाप-हरणाय करधृतमोहचूर्णपिटकः सख्युरुपचिकीर्षुः मन्त्रिभिः समं रजन्यां पुरा प्रतस्थे(?) ततो गूढचारिभिः सूक्ष्मवेदिभि-र्निजसचिवैर्विज्ञापितरात्रिचरवृत्तान्तश्रवणजनितभी (भीर्वि) वभीषणो रामलक्ष्मणसंरक्षणार्थं युद्धसिन्धुपतितकपिनौकाय-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मानाय वायुनन्दनाय स्तुतिपूर्वमेतद्वृत्तमुवाच । सधैर्यो हनुमान् राजपुत्रैकतानमना वानरान् बहिः परिवेषणाय कालनियमेन नियोज्य देहवृध्या पाताळचन्द्रमण्डले निरुन्धन् महता बलेन नितान्तोन्नतं वप्रं राघवोपरि ततान ।। ततो वलीमुखचमूस्तादृशवालधिसालमीक्षमाणा विस्मयमसेधीत् ।। गगनजुषः सिद्धसाध्यकिन्नरप्रभृतयः सञ्जातसन्तोषाः पुष्प-वर्षाणि ववर्षुः [चक्रुः] ।।

ततो रावणसखः [खो] वप्रदूरस्थः सुग्रीवादिस्थिति-विज्ञानाय प्रत्येकं [?] द्वौ चोदयामास ।। तौ सचिवौ प्राकारान्तरं प्राप्तुमशक्नुवन्तौ पराजयं प्राप्तवन्तौ निवृत्तौ विभवे जगदतुरिदम् ।। तदाकर्णनजाज्वल्यमानरोषाग्निर्मायानिधिर्विभीषणवेषमव [अवलम्बमानः] संरक्षिणः कपींस्त्वर-यन् सालान्तरं गतः सुग्रीवादीन् मोहनचूर्णेन मोहयामास ।। निद्राणौ राघवौ तु मायाशणसूत्रसंयतौ विधाय पिटकमध्ये निक्षिप्य कक्षे तमुदुह्य रसातलनगरस्थितकाळिकादेव्यै प्रातस्तौ बलिं दित्सुः मञ्जूषिकां तदालये स्थापयामास, स्वयं जागरूकः शुद्धान्तमगमदिति कथां स्पष्टं दर्शितवान् द्वितीये स्तबके ।।

## ।। तृतीयस्तबककथानुक्रमणिका ।।

अथ ~प्रपश्चिमतले विभीषणो दुःशकुननिशामन, शङ्कायमानमना, मारुतिं द्रुतमागत्य रामदर्शननिमित्तं मार्गं

राज्य

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ययाचे । स वायुपुत्रो नेत्रलक्षितरामचन्द्रस्त्वं पुनरागतः कथमित्थकथयत् । निश्चयकथितराघवापहरणो विभीषणः संहृतविश्वरूपो हनुमांश्चोभौ पल्लवतल्पे राघवावनीक्षमाणौ चिरं रुरुदतुः । समग्रवाहिन्यपि चिराय विललाप । तदानीं धैर्य-प्लवेन शोकपारावारपारं गतो "रक्षसो वर्त्म दृष्टं चेद्राघवावत्र (प्रदेशं ?) नयिष्यामीति [नेष्यामीति]" प्रतिज्ञातवान् हनुमान् । तस्य राक्षसपथं दिदर्शयिषुरभूद्विभीषणः । ततो द्वावपि राजकुमारौ मार्गमाणौ त्रिंशद्योजनदूरं गत्वा वनमध्यगतं कमपि तटाकं ददृशतुरिति कथामभाणीत् तृतीयस्तवके ॥

## ॥ चतुर्थस्तबककथानुक्रमणिका ॥

अथ विभीषणोऽवदत् तस्मिन् सरसि सहस्रपत्रकर्णिकायां मार्गः सूक्ष्मोऽस्ति तेन त्वं तनुरूपः पातालं प्रविश मैरावणपुरं दृष्टं भवे"दित्यभिधाय ययौ ॥ ततः कृतदेवताप्रर्थनः प्रवेष्टु-कामः पद्मसविधमुपेयिवान् हनुमान् ॥ तटाकं रक्षता स्वं निरुन्धानेन मत्स्यवल्लभेन समं नियुद्धशिल्पं विरच्य चिरं, पराभूतो विस्मितस्तदीयवृत्तं पप्रच्छ । मत्स्यवल्लभः" पूर्वं हनुमान् समुद्रलङ्घनावसरे सञ्जातस्वेदजलमलं पिण्डी-कृत्य सिन्धौ चिक्षेप । तत्रत्या काचन तिमिङ्गिसा तन्मलं भुक्त्वा मामसूत ॥ ततो नष्टसालिग्रामप्रदानेन सन्तुष्ट-त्रिचो विरिञ्चिर्मह्यं काङ्क्षितान्वरान्ददौ । तदानीं मैरावणेन

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विहितसख्यस्तन्निदेशेन सरोवरमिमं पालयामि कस्त्वं ब्रूही-त्यवादीत् ।" पुत्र, अहमेव हनुमान् राघवापहारिणं मैरावणं मृगयामीति (मृगय इति वा) त[ज]ल्पन्तं मारुतिं जनकं मत्स्य-वल्लभो बहुशः प्रणम्य स्कन्धोपरि निवेश्य पाताळमधिगत्य मैरावणपुरं दर्शयामासेति कथां वर्णितवान् चतुर्थे [स्तवके]

### ।। पञ्चमस्तबककथानुक्रमणिका ।।

अथ संपूर्णमनोरथो रावणसखस्तस्यामेव निशायामन्तःपुर-स्त्रीभिः सुखं क्षणं निदद्रौ । ततः प्रबुद्धः "प्रातः कालिका-बलिदापनाय साम्प्रतं पूजां चिकीर्षया [पूजाञ्चिकीर्षया] कारणवशेन निगळसन्दानितपदां दुःखितां दुर्दण्डीं भगिनीं सलिलाहरणाय तटाकं प्रेषयामास । सा साध्वींयसी कर-विधृतकनकघटा मन्दं मन्दं निर्गच्छन्ती रामलक्ष्मणयोः शीलं स्तुवन्ती भ्रातरं निन्दयन्ती [निन्दन्ती] सरसीमाससाद ।।

तत्रत्यो हनुमान् हृष्टस्तस्याः वृत्तान्तः प्रश्नपूर्वं पृष्टः स्वस्मिन् [हृष्टस्तद्वृत्तान्तप्रश्नपूर्वकं स्वस्य] रामदूतत्वं ज्ञापयामास । मुदिता दुर्दण्डी भणितुमुदयुङ्क्त "हनुमन्, ब्रह्मदण्डसुतो ममावरजो मैरावणो मेरुसानुनि चिरतपश्चरण-सन्तोषितप्रसन्नब्रह्मणः सम्पादिताऽसङ्ख्येयवराः [रः] तेन निर्मितं देवदानवैर्दुरवाप्यं[?]देवदानवानां [दुरवापमितिवा] नगरमध्यवात्सीत् । नीलकेश्याः पुत्र्या लाभेन मुमुदे ।। "कदाचित्" तव कुमार्यां कृतविवाहो भागिनेयो नियतं राज्यसुखमनुभविष्यति " इत्यशरीरवाणीं निशम्य कुपितं, मम

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पुत्रं हन्तुमागतवन्तं दुष्टं [मत्पतिः] प्रार्थयन्नरौत्सीत् । ततो मैरावणो मत्कुटुम्बं शृङ्खलाङ्कितं विधाय बन्धागारे चिक्षेप । पतिर्मम दुःखेन कालवशं प्राप्तः । सांप्रतं दुरात्मा निरपाधिनौ राजपुत्रावपहृत्य निधाय कालिकापूजाकरणाय जलानयननिमित्तं मामचोदयदित्यवोचत् ।। मारुतिः तादृशं खलं जित्वा त्वत्सुतं राष्ट्रेऽभिषेक्ष्यामि सत्यमिति प्रतिज्ञाय विश्वरूपदर्शनेन तस्या विश्वासभाजनमासीत् ।। ततः सूक्ष्मरूपो दुर्दण्डीभरितजलघटप्रविष्टो सपत्नागमनेन गोपुरमध्यगतुलायास्त्रुटनं समीक्षमाणैः रुष्टैर्निशिचरीं ताडयद्भिः सप्तद्वारपालैः सह योद्धुकामः बृहदाकृतिर्हनुमान् सप्तवप्राणि बभञ्ज । ततो दुर्दण्ड्या निगळबन्धं विमुच्य [निर्भिद्य]पूर्वं कालिकालयं गतो विनुतदेवीदर्शितपिटकनिषण्णरामलक्ष्मणौ विलोकयामासेति कथां विस्तृतवान् पञ्चमे स्तबके ।

### ।। षष्ठस्तबककथानुक्रमणिका ।।

अथ हनुमान् देवीं प्रणम्य राक्षसान् हन्तुकामः सौधाग्रिमाणमाक्रामन् संवर्तघनगर्जनकैतवेन मैरावणं योद्धुमाह्वस्त [आह्वास्त] ततोऽशनिघोरकपिशब्दनिशमनभ्रान्तचित्तेन हतशेषनिशमितभटवधेन क्रुध्यता विभुना नियुक्तं पौनःपुन्येन समागतं सांयुगीनैः सैनिकैः रक्षितं कौणपसैन्यं निखिलं शूराग्रगण्यो धीरो मारुतिः ससदि[?] लोहस्तम्भेन जघान ।।

ततः स्वयमेव रणतलं गतेन मायाकुशलेन रक्षोऽधिपेन समं चिरं युद्धक्रीडां कुर्वाणो मुहुर्मुहुः [illegible]

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

समाश्रितविविधदुष्टजन्तुरूपं तं निहन्तुमशक्तो दुर्दण्डीदर्शितोपायो मारुतिर्ब्रह्मवरेण भृङ्गस्वरूपैः पर्वतकन्दरेषु वलमानैस्तदीयप्राणांशैः सार्धं रजनि (नी) चरमयामे मैरावणवधं व्यधादिति कथामाचष्ट षष्ठे स्तबके ॥

॥ सप्तमस्तबककथानुक्रमणिका ॥

अथ मारुतिः स्वनिदेशेन विमुक्त [विमोचित] निगलबन्धं निजस्तवं कुर्वन्तं दोर्दण्डेयं नीलमेघं हर्षयन् चारयुवतिमुखेन पतिवधं श्रुतवतीः कुणपमुपगूहयन्तो रुदती राजयुवतीः सान्त्ववादेन समाश्वासयन् नीलमेघाय राज्यं, पुत्राय मत्स्यवल्लभाय सेनाधिपत्यं [च] दिदेश ॥ ततः कालिकायतनस्थापित राघवचिह्नित पिटकं शिरसि निधाय लङ्कायामरुणोदयवेलायां कपिसंहतौ निदधौ ॥ ततः सन्तमसेन सममन्तर्धानं गतायां मञ्जूषिकायां भवान् विनष्टनिद्र इवोत्थाय विहितसान्ध्यनियमस्तूणबाणधनुर्धरो रावणमधिदर्शमवधीत् । ततोऽयोध्यां प्राप्तो भवान् पट्टाभिषिक्तोऽभूदिति अगस्त्यकथितमारुतिचरितं समाकर्ण्य हृष्टो रामो वायुनन्दनाय मुक्तासरं ददौ ॥ ततः सर्वेषु सभ्येषु गतेषु पुरन्दर[:]स्वर्गमिव रामो भूमण्डलं पपालेति[?] (पालयामासेति) कथामुक्तवान् सप्तमे स्तबके ॥

---×---

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ एतद्ग्रन्थगत गद्यपद्यसङ्ख्या ॥

| स्तबकसङ्ख्या | पद्यसङ्ख्या | गद्यसङ्ख्या | समग्रम् |
|---|---|---|---|
| 1 | 67 | 9 | 76 |
| 2 | 62 | 13 | 75 |
| 3 | 63 | 9 | 72 |
| 4 | 60 | 15 | 75 |
| 5 | 70 | 14 | 84 |
| 6 | 79 | 11 | 90 |
| 7 | 35 | 4 | 39 |
| सर्वस्तबकश्लोकसङ्ख्या | 436 | | |
| सर्वस्तबकगद्यसङ्ख्या | — | 75 | |
| सर्वस्तबक गद्यपद्य समग्रसङ्ख्या | | — | 511 |

श्रीरस्तु

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# ॥ शोधनिका ॥

| अशुद्धम् | शुद्धम् | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| दीर्घैक | दीर्घैक | 1 | 2 |
| तनवा | तनया | ,, | 4 |
| माहर्तु | माहर्तुं | 5 | 12 |
| भ्रमतो | भ्रमतो | 6 | 3 |
| दैंवतै | दैंवतै | 8 | 2 |
| मूर्त | मूर्तं | 13 | 16 |
| निस्त्रिंश | निर्स्त्रिंश | 16 | 5 |
| यढिच्छसि | यदिच्छसि | 23 | 3 |
| जगदु॰ | जगदुः | ,, | 4 |
| प्रसक्तेः | प्रशक्तेः | 24 | 7 |
| समुपेयुषास् | समुपेयुषाम् | 26 | 9 |
| सत्यवानिना | सत्यवादिना | 27 | 11 |
| ततुज | तनुज | 29 | 7 |
| ढश | दश | 31 | 6 |
| पर्वं | पूर्वं | 31 | 11 |
| सस्रो | सस्रौ | 34 | 20 |

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

| अशुद्धम् | शुद्धम् | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| निढधे | निदधे | 37 | 20 |
| — | 'कुटायुधैः | 40 | 6 |
| कविं | कपिं | 41 | 1 |
| केको | क्लेदो | 41 | 7 |
| स्मः | स्म | 49 | 2 |
| ब्रात | व्रात | 52 | 13 |
| विपृपिनो | विटपिनो | ,, | 14 |
| पुर्पृ | पुष्टि | 53 | 10 |
| सखाढिव | सखादिव | 54 | 2 |
| विचिन्वद्भूयां | विचिन्वद्भूचां | 56 | 10 |
| (ब्र) | (व्र) | 60 | 4 |
| कस्त्बं | कस्त्वं | 65 | 1 |
| पृष्ठवान् | पृष्टवान् | 65 | 6 |
| सालग्रामादिपजनम् | पूजनम् | 66 | 10 |
| देवगहरत् | देवमहरत् | ,, | 11 |
| रोप्यं | रौप्यं | 69 | 15 |
| घटं | घटे | 75 | 3 |
| आहरार्थं | आहरणार्थं | 75 | 3 |
| राघवोढन्त | राघवोदन्त | 75 | 17 |

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

| अशुद्धम् | शुद्धम् | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| सर्वनाम्सस | सर्वराक्षस | 76 | 7 |
| भ्रात्रोः | भ्रात्रोः | 76 | 8 |
| प्रमुषिन | प्रमुषित | 76 | 10 |
| असंस्त | अमंस्त | 76 | 17 |
| बर्हिगण | बर्हिगण | 79 | 19 |
| (?) | To be removed | 82 | 2 |
| 1 | Foot note is to be ignored. The text नीलकेश्याः पुत्र्याः लाभेन is correct. | | |
| वार्क्रं | वक्रं | 83 | 2 |
| मन्नाय | मन्नाथ | ,, | 10 |
| सपर्यार्थे | सपर्यार्थं | 84 | 12 |
| तत्का | तत्काक | 84 | 17 |
| द्राधिष्ठ | द्राघिष्ठ | 86 | 20 |
| अशुचि | अशुचिं | 95 | 11 |
| तढाराव | तदाराव | 102 | 8 |
| वुर्णीषु | वृणी ... | 103 | 8 |
| धनैः | घनैः | 108 | 15 |
| आवसन | आवसन् | 109 | 12 |
| तनूभोऽयं | तनूभवोऽयं | 111 | 1 |

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

| अशुद्धम् | शुद्धम् | पृष्टम् | पङ्क्तिः |
|---|---|---|---|
| आस्फालितातित | आस्फालितानि | 111 | 17 |
| वर्षर्तुंशोभा | वर्षर्तुंशोभां | 112 | 8 |
| यमपुरन् | यमपुरम् | 116 | 2 |
| शिष्यत्वभेत्म | शिष्यत्वमेत्य | 118 | 1 |
| निर्नरत्व: | निर्मरत्वैः | 118 | 5 |
| सन्तप्त प्र कोक | सन्तप्तकोक | 122 | 4 |
| सर्बे: | सर्वैः | 122 | 6 |

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

॥ श्रीगणेशाय नमः ॥

॥ श्रीगुरुभ्यो नमः ॥

॥ श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्राय नमः ॥

# ॥ श्रीमारुतिविजयचम्पूः ॥

———:❋:———

श्रीमानेष सुधांशुमौलितनुजो रम्यद्विपेन्द्राननः
प्रत्यूहाचलभेदिपादकुलिशो दीर्घैकदन्तोज्वलः ।
दैतेयौघतमःसहस्रकिरणो वन्दारुकल्पद्रुमो
हेरम्बः कृपया हिमाद्रितनबासंलालितः पातु नः ॥

वाग्देवीं संस्फुरद्विद्यां निधाय हृदि भक्तितः ।
ललितो रघुनाथेन क्रियते भावसङ्ग्रहः ॥

श्रीमानिति – श्रीमत्वादिनवविशेषणविशिष्टो हेरम्बः, हे शिवे रम्बते तिष्ठति इति हेरम्वो विनायकः । "हः शङ्करे हरा"विति नानार्थरत्नमालायामेकाक्षरकाण्डः । स्तम्वेरम इत्यादिवदलुक्समासः । नः अस्मान् । बहुवचनमिष्टजन-सङ्ग्रहणाभिप्रायकम् । पातु रक्षत्विति सम्वन्धः । तेषां विशेषणानामर्थः स्पष्टतरो ज्ञायते । साम्प्रतं विशेषण-प्रयोजनं व्याख्यायते । सुधांशुमौलितनुज इत्यनेन पालन-करणसामर्थ्यद्योतकमहत्वं प्रतिपादितं भवति । रम्यद्विपेन्द्रानन

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इत्यनेन कोपकाले प्रार्थनायुक्तत्वात् प्रसन्नमुखविलासराजमानत्वं सूचितम् । प्रत्यूहाचलभेदिपादकुलिश इत्यनेन प्रारीप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं विघ्नविच्छेदनपटुत्वमभिहितम् । श्रीमानित्यनेन विभत्वयुक्तेषु याच्ञाप्रसक्तेः सम्पत्प्राचुर्यसम्पन्नत्वमुदितम् । दीर्घैकदन्तोज्वल- इत्यनेन सम्पत्तिरस्ति यदि स्वयं विविधभूषणभूषितो भवति । तव किं यत्प्रयोजनं तन्नेति दन्तेनैव प्रकाशमानस्यास्य भूषाभिः कैमर्थ्यम् । वन्दारुकल्पद्रुम इत्यनेन बुद्ध्यैश्वर्यादीनां भक्तजनविनियोगकारित्वमवगतम् ॥ दैतेयौघतमःसहस्रकिरण इत्यनेन दुरहङ्कारिणामभ्यसूयापूर्णानामस्मिन्प्रबन्धे दोषोत्पादकानामुत्सारणपाटवं सूचितम् । हिमाद्रितनयासंलालित इत्यनेन पार्वत्याः करुणार्द्रहृदयत्वात् भक्तदयाशालित्वं द्योतितम् । पूर्वाधेयानन्तराधारभावेन परतन्त्रो बालोऽयं किं तवाभीष्टं दास्यत इति न वाच्यम् । किंतु शिवयोः सुत इत्यनेन तदीयगुणगणानामस्मिन्नेव (अस्मिन्नपि) विद्यमानत्वं वाच्यम् (विद्यमानत्वात्) ॥ कारणगुणाः कार्ये संक्रामन्तीति तार्किकाः ॥ एषः चित्तसन्निहित इत्यर्थः । विनायकः पायादित्यर्थः । किञ्च दानववधनिपुणकर्तृगतपुंल्लिङ्गेन पुमान्नायकः राक्षसहननं कृतवानिति काव्यार्थः किञ्चित्सूचितः ॥ अत्र सर्वत्र रूपकालङ्कारः । लक्षणं तु "उपमैव तिरोभूतभेदा रूपकमिष्यत" इति ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्रायशोऽस्मिन्ग्रन्थे कदलीपाकः, "कथितः कदलीपाकः किञ्चिद्गूढरसोदय" इति लक्षणात् । ग्रन्थाद्यन्तयोः श्रीशब्दमगणप्रयोगः काव्यपठितुः विद्याधिकायुरैश्वर्यसंप्राप्तिहेतु. । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति अध्येतारश्च प्रवक्तारो भवन्ति इति भाष्यकारवचनप्रामाण्यात् । "मो भूमिः सगुरुः शुभं वितनुते भः पूर्वगुश्चन्द्रमाः कीर्तिं योऽभ्युदयं पयः प्रथमलोनस्वश्चिरायुस्त्रिळः । वायुः सोऽन्तगुर्विदेशगमनं मध्येगुरुर्जोरुजन"मिति गणप्रयोगफलानि ।। शार्दूलविक्रीडितमेतत्– "सूर्याश्वैर्मसजास्तथा सगुरवः शार्दूलविक्रीडितमि"ति लक्षणात् ।

।। मङ्गलश्लोकव्याख्या समाप्ता ।।

---

समीरवेगं कुशकोटिबुद्धिं
सीतासुतं(दं) राक्षसवंशकालम् ।
नयाकरं नन्दितरामभद्रं
नित्यं हनूमन्तमहं नमामि ।। 2

श्रोतृश्रवःसुखविदायि पुराणवेद्यं
रामाभिधानकथनेन नितान्तकू(पू)ता ।
जिह्वा दधातु रघुनायकदूतवृत्तं
कान्तार्थगर्भपदमण्डितपद्यगद्यम् ।। 3

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चूर्णान्तरस्तबकसप्तविभज्यमानं
षट्त्रिंशदुत्तरचतुःशतपद्यपूर्णम् ।
चम्पुं (पूं) परं सकलदेशनिवासिधीराः
पश्यन्तु यान्तु च मुदं त्रिधुताभ्यसूयाः ॥ 4

सारेण हीनमपि पद्यमयोक्तिजालं
जिज्ञासितव्यमवनौ विबुधैर्मनोज्ञम् ।
वालस्य लीलनरतस्य पयःप्रियस्य
शृण्वन्ति वाचमसतीमपि सादरं हि ॥ 5

काचिद्दिनेशान्वयसम्भवानां
महात्मनां शौर्यवतां रघूणाम् ।
त्रिविष्टपस्य प्रतियातनेव
राज्ञामयोध्येति महीतले पूः ॥ 6

दुर्वारवीर्योद्धतसार्वभौमैः
राजन्वती क्षत्रपरैः क्रमाप्तैः ।
जलादिदुर्गैः परिवेष्टितत्वा-
दन्वर्थसंज्ञां स्फुटमाददे या ॥ 7

यस्यां खलु ॥

सोपानसंहृतिपथेन शिरोगृहं त-
दारुह्य वक्त्रविजितद्विजराजविम्बे ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

संस्थापितां बत पदाय वराहमुद्रां
स्त्रीभिः कुरङ्ग इति कापुरुषा वदन्ति ॥ 8

सृष्टो मया यद्वनितास्यतुल्यः
कलानिधिः कन्दलरश्मिरेषः ।
इतीर्ष्ययासौ स्वशरीरमध्ये
धात्रा मलं किं निहितं दधाति ॥ 9

यद्वध्रूचलनलोचनस्थया
शोभया हठविनिर्जिता इति ।
लज्जयेव शितिपङ्कजालये
मज्जनं सरसि ता वितेनिरे ॥ 10

यन्नारीरुचिरपदस्रवन्मरीची-
माहर्तुं दिवसमहर्पदत्तदृष्टिः ।
रात्रौ वै शिशिरतराम्बुवृन्दमग्ना
पद्मालिः कमलभुवं तपस्यतीव ॥ 11

[1]पद्मी (द्मे) शकुम्भकुचनम्रतनूल्लसन्त्यो(न्तीः)
निर्माय यत्र मृगराजकटीर्वधूटीः ।
कुत्रापि तत्सदृशरूपधरा विरिञ्चिः
स्रष्टुं पुनर्नहि शशाक विचित्रमेतत् ॥ 12

---

1. गजेन्द्रेत्यर्थः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यस्यां तुषारकरदीधितिपाण्डुराभे
सौधस्थले स्थितिजुषः सह कान्तवर्गैः ।
पुष्पाणि वध्व इव ता भ्रमतोऽपहर्तु-
मभ्रे पुरा स्फुरिततारगणान् यतन्ते ।। 13

रम्भादिनार्यः पुरुरूपयुक्ता
यदङ्गनासुन्दरतामपे(वे)क्ष्य ।
सर्वानता ह्रीविनतास्यपद्माः
स्वकीयकान्तिं नितरां निनिन्दुः ।। 14

स्मरप्रियामनोहराबलाननेन्दुनिःसर-
द्गभस्तिजुष्टतिग्मरश्मिसङ्क्षरत्स्रवन्तिकाम् ।
निरन्तरोच्चलत्पयःपयोधिवीचिसन्निभां
सदा बिभर्ति हर्म्यपङ्क्तिकोटिपुरु(?)या(मुत्तमा) पुरी

स्त्रीणां ह्रिया यत्र तिरोहितानां
वैडूर्यकुड्येषु पुरः प्रसक्ताः ।
आदर्शकुड्येष्वमला युवान
आलिङ्गितुं ताः प्रतिमाः समीयुः ।। 16

लीलानिशान्ते कलधौतदिग्धः
सक्तत्रिमो यत्र रराज हंसः ।
अभ्यस्तुकामो गतिमङ्गनाना-
मिवाप तत्पङ्कजजन्मलोकात् ।। 17

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वातायनागतसमीरणकम्पितेषु
वृन्दारकाग्निय(?)शिलोपमकान्तिभाङ्क्षु ।
यस्यां निषण्णवनिताकुटिलालकेषु
को वा ध्रियं मधुकरा इति नो विधत्ते ॥ 18

यां श्रीमतीं पुण्यकृतां नराणां
लब्धुं सुखात्पक्वतपःफलानाम् ।
आलेति सर्वप्रणतेष्टदात्रा
सृष्टो ध्रुवं नाक इहाह लोकः ॥ 19

लङ्केति शङ्कां परिघेण कान्ता
नक्रादिपाध(थ)श्चरदुर्गमेण ।
महेन्द्रकूटद्वयसेनयाधात्
समेन वारांनिधिना सुराणाम् ॥ 20

चूर्णिका —

याह्वतिमात्रवासनाकमनीयप्रसूनश्रीभवद्विटपसङ्कटवकुळादिपलाशिविलासितोभयकूलया मानससरःप्रसृतया सरयूतरङ्गिण्या गगनपथचुम्बिभिरवकृष्टप्रकोरैः प्राकारैश्च परिवीतनिर्बाधहृष्टजनसंबाधरथ्या समूढश्लाघ्यमानरत्नैरगण्यपण्यपरिपूरितैः क्रयिककुल"मित एही"त्याह्वयद्भिरिवापणैः सङ्कुलविपणिः सार्वकालिकोत्सवविद्योतमानैरुद्गतमङ्गलवाद्यै-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

र्देवालयैर्मेदुरीकृतान्तर्भाग(गा)मेदिन्यां क्रीडितुमिच्छया मर्त्य-त्वमुपागतैर्देवतैरिव सार्ववेद्यैः सर्वशास्त्रपारीणैः नित्यालङ्क-र्मि(र्मी)णैः ब्राह्मणैः सम्पन्ना नयमार्गप्रविष्टैरपि विनयावहैः व्यापारसन्दानितस्पृहैरूरुजैः द्विजशुश्रूषणधुरीणैर्वृषलैश्च विपोष्य-माणमाघविन्ध्याः पुर्या रुचमचूचुरत् ॥

अदभ्रशालैः समरम्यभूमि-
र्लेपार्जुनैर्यत्र विचित्रयुक्तैः ।
वृ(व्र)जैर्गृहाणामिव राजमार्गो
रराज मुक्ताफलनद्धहारैः ॥ 22

यदुपवनविपिनवाटीताम्रसोपानवापि-
दृढ (?)दुपजित[दृषदुपचित]लीलाशैलमालावलीढा ।
त्रिविधविटपिवल्लिर्नन्ददा[ना]नंददान्या-
न्स्वकुसुमरसगन्धैर्गन्धकान्छादयन्तो ॥ 23

सौधैः सुधातिशयलेपनशुभ्रभाभि-
र्जेतुं हिमांशुमिव तस्य सृतिं निरुध्य ।
संस्थैरजस्रनृपसेवितशृङ्गभागै-
र्या जालजालललितैर्विपुलैर्व्यराजीत् ॥ 24

तां रामचन्द्रोऽधिवसन् सदीशः
करैः सहस्रैर्मृदुभिः सभूतिः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शितिप्रकाशः प्रकृतीरनार्ती-

ररञ्जयद्विश्वजनीनकारी । 25

लङ्कापालक वह्नि(न्य)हस्तिदलनापञ्चाननस्य प्रभोः

सर्वक्षत्रिययौगिके कृतरतेः स्मृत्युक्तधर्माध्वनि ।

श्रीमद्राजमणेः प्रपञ्चमवतो व्याकीर्तिकन्याखिलं

विश्वं वीक्षितुमुत्सुकेव ककुभां प्रान्तान्यतीयाय सा ॥

शेषः शीर्षसहस्रवान् गतधुरः क्रीडामसेधीदयं

स्वच्छन्दं धृतकौतुका दिगधिपास्तूष्णीमवर्तन्त हि ।

दिङ्नागास्तृणचर्वणार्थमगमन्खेलन् ?(खेलं)वशाभिर्वनं

बाहुस्थामभुजङ्गदष्टखलके रामे भुवं बिभ्रति ॥ 27

चोराः कोशनिकेतमेत्य धनिनामर्थान् न जह्रुः परं

चौर्याख्यापहरत्वराः समभवन् रामे प्रजा रक्षति ।

व्योम्नि प्राणिदरिद्रताभ्रमदियं स्वस्याः पदालाभत-

स्तस्मात्क्षीणदशां धरन्ति नियतं सायं दिनेशादयः ॥

सौशब्दैर्मुखरायमाणहरितो लोलान्रसज्ञानमून्

संख्यावत्कविषट्पदान् गुणसुमव्यूहान्

प्रहर्षान् कृतः(?) ।

राजोत्तंसयशोदुकूललसितास्तस्येशितुः स्वागतान्

प्रेम्णा मूर्ध्नि निधाय हर्षमवृजन्(?)इन्द्रादि-

दिग्योषितः ॥ 29

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सर्वक्ष्मापतिमस्तवर्तिमकुटप्रत्युप्तविस्मायय—

द्रत्नस्तोममयूखचञ्चलपयःपद्मायमानाङ्घ्रियुक् ।

विद्वद्राजमणिः कटाक्षवलनैर्नीलोत्पलाभी (भै) रयं

दध्ने कल्पकवृक्षभारमवनौ लोकार्थसंसिद्धये ॥ 30

चू० -

अथ कदाचिद्विदारितदुरात्मकदम्बः कृताभिवादुकपोषण. निजान्ववायावतंसमनुप्रजापतिप्रणिहितन्यायायनादनपेतः उत्कृ-ष्टदशांसु चतुर्दशकलासु प्रवीणः निरन्तरसमाहिततपोधन-ध्यानगम्यः बर्हिर्मुखावकीर्णमहिमातिरिक्तश्चतुरर्णवपर्यन्तवर्त-मानोर्वीपालकरनिग्राहवैज्ञानिकः गारुत्मतातुलशातकुम्भस्तम्भ-शतशोभिते जाज्वल्यमाने सुषमापराजितसुधर्मे सभाकुट्टिमे कस्यांचित् कुशलवेलायां पुरारण्यवासविहितसंस्तवानुगत – सिह्ममिव सिह्मासनमलङ्कुर्वाणः सम्प्राप्तमैत्रसुग्रीवादिभिः कपिभिः सुमन्त्रपुरोगमैर्मन्त्रिभिः विभीषणाद्यैश्च समुपास्यमानः सामाजिकाञ्जलि–कुड्मलमहोत्पलपरिषदि चक्राङ्गायमाणः शासनकरमनुजाधिपसमाराधितः चामीकरमयकाण्डप्रकीर्णक – चालनव्याकुलललनाकरकङ्कणदरशिञ्जितनिशमनव्यासक्तः व्या-कोचलपननलिनमधुव्रतायमानेक्षणः क्षणलम्पटः महा-नीलादिनवमणिप्रोतमौलिमूलविलम्बितमौक्तिकसरदीपितललाट-कोणः ताम्राश्मप्रच्छन्नकेयूरदंशितांसः वेतण्डशुण्डायतदोर्द्दण्डः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मार्ताण्डमण्डलवर्तुलमृष्टकुण्डलछविरूषितगण्डप्रदेशः उत्कण्ठित-पण्डितमण्डलः कण्ठाश्रितशतयष्टिकहारविभ्राजितोरस्कः नखेन्दुद्युतिसङ्कलितपादपीठः हरिन्मणिवर्णमूर्तिकान्तिभिरनणीयसीभिस्तिरस्कृताभरणभाः व्यदरसादरैः सोदरैरुपलक्षितः समाव्रजते सागस्त्याय मुनिस्तोमायाचरितसपर्यो रघुवर्यः स्वेष्टजनाभ्यागमेन वदनारविन्दाभिष्यन्दानन्दबाष्पमकरन्दः मन्दहासदलदोष्ठपुटः पीताम्बराभिरामो रामः भक्तितश्चरण-संवाहनपरं जानकीचातक्यास्तटिद्धन्तं हनुमन्तं स्मृतिपथ-गतैतदीयोदन्तस्तमस्तौत् ॥

वातोत्पन्नसमो मुनीश वदतात्को वास्ति भूमण्डले
स्वर्वा वासवपालिते क्षितितले वस्वौकसारेऽपि वा ।
यन्मां मन्युगमृश्यमूकशिखरस्थेयांसमेष व्रती
जानक्या [1]समुपाद्य(?)मारकृशया संयोजयामास हि ।

अभीष्टघटकः शुचिर्विनयवैभवस्थानको
महत्सु सुदुरात्मसु ज्वलनभित्त(त्ति)वद्दुःसहः
रणेषु भयदुर्विदः पवनभूरयं वीर्यवान्
दशाननविपोथनं मम न चेद्भवेद्दुष्करम् ॥ 32

विमृश्यकारिणां मल्लस्तरस्वी वचने स्थितः ।
एतादृशोऽस्ति दूतश्चेत् किमसाध्यं विभोर्भुवि ॥ 33

1. समुपेत्य

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

एवमेनं प्रत्यतः (प्रत्ययतः) प्रशंसन्तं सन्तं कौसलेयं सतापसाः सभ्याः सर्वेऽनुमोदयाञ्चक्रुः ॥

अथ योगिनागपूगागमस्तबकः सर्वाङ्गीणभसितपाण्डुरितः हिमालय इव गिरिः विपाककपिलाभिर्निजसटाभिः संस्पृश्यमान-जघनाभोगः लोपामुद्रावल्लभो भगवान् कुम्भसम्भवः जम्भज-दम्भभित्समं विभुमैक्ष्वाकमेनामनीचां वाचमुवाच ॥

श्लो– पुरातनस्त्वं पुरुषः पवित्रः
पुण्यात्मनः पातुमरीनहंयून् ।
प्रकाममुत्त्रासयितुं च राम !
मनुष्यरूपं धरसे जगत्याम् ॥ 37

तां लौकिकीं रीतिमुपाश्रितेन
तथापि किञ्चिद्भवता न बुद्धम् ।
रात्रिप्रवृत्तं हनुमच्चरित्रं
तत्संश्रृणुष्वावहितोऽद्भुतौकः ॥ 38

चू० –

सलिलनिधितैलद्रोण्यन्तर्वर्तिवर्तिशिखाविद्योतमानपात्रक-शाङ्काकरे लङ्कापुरे त्वद्वशंवदकीशसैनिककिलकिलाविरावदरेण पलायमानायां पलाशपतिसम्पच्चपलायां कृतकदनेषु चोपाजीविषु रावणः केवल एव यदा खल्ववशिष्यते स्म ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लोकः –

भवान् वीरः श्रेष्ठः करधृतधनुस्तूणविशिखः
पतिं क्रव्यादानां प्रतिगतपरेतप्रभुपुरम् ।
परेद्युः सभ्राता रघुवर चिकीर्षुः श्रमयुतः
चतुर्दश्यामासीद्रणभुवि न सुप्तः किमु निशि ।। 39

ते रावणो राघव भीतभीतो
दीनः परं कृत्यमथ व्यजानन् ।
तस्यां निशायां गहनाग्निरुद्धो
विद्रूयते स्मेव वने महेभः ।। 40

पुत्रो महेन्द्रजिदपि त्वरितं निशाटा-
नामन्त्रितुं रणहतानसहायतः किम् ।
भूयो मृथा(धा)य हरिभिर्हरिगेहमागात्
मा त्वं बिभेहि भण को विपदीति कोऽस्ति ।। 41

अत्यश्रुपूरममितं निगदन् दशास्यो
निःसारयन्(न्न)अनलकल्पविलोचनाळिः ।
मूर्तं निजं बलमिव त्रिदशेशशत्रु-
मैरावणं रहसि संस्मृतवान् स्वमित्रम् ।। 42

चू० –

तदानीमेव द्रुहिणवितीर्णवरेणाविर्भवन्तमग्रतः विक्रमरूप भोः ! सुहृत्प्रवेक, सुनासीरमुखानप्यनायासेन दासभूयं प्रापय-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तस्तवापि सांप्रतं सांपरायमेतादृक्षं निकटयातवैवस्वतेन अदीर्घदर्शनकेनागतमित्युद्दण्डं व्याहरन्तं निर्जितामरमप्य-निर्जितामरं अव्यलीकपातालवासादजेयं क्षपाचराधिपमात्म-प्रियं भावुकमाप्रपदीनसव्यानसमावृतकण्ठभागतयाप्रस्रवणस्रवण-व्याप्रियमाणाञ्जनगिरिमिव कल्याणमणिमयभूषणभूषितमपि भीष्माकृतिं सर्वजनपशुहिंसनवागुरिकायमाणमायाखर्निं दैव-युद्धङ्करकरनर्तमान (?) धनुर्ज्याकर्षणव्रणकिणाङ्किताङ्गुलिं वयस्यवैरिवैरायितारं विजृम्भितवीरगर्जनं दन्तदंशनपटुनिःस्वनं शस्त्राद्यायुधानि कटिपार्श्वयोस्तन्वानं निर्मर्दितैरावणं मैरावणं दशवदनोऽवदत्तम् ॥

श्लो.– रामाभिख्यो भोः सखे सद्वरेण्यः
कश्चित्सम्राण्णन्दनो लोकवन्धुः ।
कालायत्तात्सानुजात. सभार्यो
देशभ्रष्टोऽगस्त्यकाष्ठां प्रतस्थे ॥ 43

मर्त्यात्मजस्य वनमावसतोऽतिदुर्ग-
कन्दादिमूलमदतः क्षणदाचराणाम् ।
सन्तन्वतोऽप्रकरणं सुखदायिनोऽपि
हा कण्टकास्तमभितत्वरिरे विरोद्धुम् ॥ 44

दुष्टोऽपि साधुरहितः स मनुष्यपोतः
सङ्ग्रामकौशलखरप्रमुखान्मुहूर्तम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

एको व्रजेद्यदि गमिष्यति भीरुभावं
सर्वानितीव पथि धर्मगृहं निनाय ॥ 45

शृण्वतस्तदनु काननवृत्तं
रूपमस्य मनुजस्य च पत्न्याः ।
भ्रातृनाशजशुचं मम तं स-
न्द्राव्य हन्ति मदनः स्म विपाठैः[1] ॥ 46

लावण्यमासेचनकं महीयो
मितेतराभिर्दुरवापमस्याः ।
शेतेऽप्यभिष्टुत्य विमुच्य मध्ये
श्रान्तो भुजङ्गाधिपतिः पयोधौ ॥ 47

तामहं नरपरिग्रहभूतां
मैथिलीमपजहार वयःस्थाम् ।
राष्ट्रमोचितमथाहितमेतं
[2]राष्ट्रमेव विनिनाय विचित्रम् ॥ 48

चू० –

तदनु तदानीं स राजदारको विधुरगतप्रियतमः शोकेनाप्यनुजेनाप्यनुसृतः पर्युषिततीव्रव्यतिषङ्गिपुष्पमालायां पर्णशालायां बहिरन्तरपि प्रेयसीं जनकनन्दिनीमनालोकमानः शुङ्मयगरलं प्रत्यवस्यन् मुहुर्मुहुर्मोमुह्यमानः कुलस्थमतमनु-

1. विपाठ a kind of large arrow. 2. Calamity.

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सरणीयमिति न्यायतः मदीयवंशभवेन कृतसमाधिना भगीरथेन प्रयासादनुष्ठितं समुद्रषट्टमहिषीनयनं मया न निरस्तव्यमिति प्रत्येत्येव निरवग्रहस्यन्दिभिः नेत्राम्बुभिः रत्नाकरभोगिनीमुत्पादयन् रमणीं तां विचिन्वन् परिग्रह-वशात् परिगृहीतगर्हितदैत्यभावेन कबन्धनामधेयेन निस्त्रिंश-वृक्णेन[1] दिव्यरूपं नीयमानेन गन्धर्वेण निर्दिष्टामेकपदी-मन्वञ्चन् गणनया पितामहास्य[2]तुलनैरमात्यैः सह ऋश्यमूक-सानुमत्सानुगतेन पूर्वजातगन्धेन सुन्दरीदरिद्रेण सुग्रीवनाम्ना केनचिद्वनौकसा समं सख्यं सहर्षमकार्षीत् ।

श्लो.— सुग्रीवमाश्रित्य सलक्ष्मणः स-
न्नादित्यवंश्यः परमभ्यनन्दत् ।
मन्त्र्यावृतः सोऽपि रघुप्रवीरं
दायादभावादिव भानुपुत्रः ॥ 49

सुग्रीवाग्रजमद्रिराट्सहचरं कालक्षयद्वाररुद्-
कायं कुर्वति राघवे गिरिमयं तत्याज साकं शुचा ।
रामो दूतमुखेन मैथिलसुतावासं प्रबुध्यार्णवं
तीर्त्वा कीशबलेन तेन रुरुधे लङ्कामलङ्कारिणीम् ॥

केतुद्योतक्षमननगरं पूर्वतो भीमघुष्यद्-
दृप्यद्रात्रिञ्चरनिबिडितद्वारदेशं वभूव ।

---

1 Cut 2 Four

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

बाहौ पश्चात् दशरथशिशुर्धन्ववर्यं व्यधार्षी(त्)
धं(ह)न्तारब्धं पिशुनकपिभिः संगरं दुर्निरीक्ष्यम् ॥

सुते मदीये बलवैरिगर्व-
करीरविच्छेदनचञ्चुशौर्ये ।
सौमित्रिणा क्लृप्तनिबर्हणेऽस्मिन्
सर्वा चमूर्निष्कदितेति किन्नु ॥ 52

रघुवंशभवेषु भोगिनेतुः
प्रियसाङ्ग्रामिककौणपासुवायून् ।
चरतः स्फुरतः समीकभूमौ
विघसत्वं गतवान् ममासुवातः ॥ 53

रामशरासनगर्तविनिर्यद्-
बाणफणी मृगयत्यधुना माम् ।
क्ष्वेळधनञ्जयसञ्ज्वलिताग्र-
स्तर्हि करोमि किमाशरनेतः ॥ 54

जितः पाकारातिस्त्रिदशकृतसाहाय्यकबलो,
यमो भीमोद्योगः कवचितरटत्किङ्करयुतः ।
कुबेरो यक्षाणां पतिरपि मयाऽऽस्कन्दनकृता
तिरस्कर्तुं नारिर्दशरथसुतो यः पटुतरः ॥ 55

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पुरा हिरण्यगर्भात्तो[1] वरः कपिनृवर्जितः ।
मम चित्तं भिनत्यद्य हीरकः[2] पर्वतं यथा ॥ 56

असहाय इति ख्यातिं लभते यः कुमण्डले ।
तद्वासो यमलोके स्यादत्र वाली निदर्शनम् ॥ 57

समदुःखी समाह्लादी समस्वसुहृदस्ति चेत् ।
अम्बरं वसुधां कुर्यात् भूमिं कुर्यान्नभःस्थलम् ॥ 58

त्वयि [3]वीध्रमनस्कमित्रधुर्ये
स्मृतमात्रेण मदन्तिकं प्रपन्ने ।
व्यसनं च बहु क्षपाचराणां
प्रमदं यज्ञभुजां प्रदीपयामि[4] ॥ 59

विश्वासनीयां शुभलाभकामैः
सुहृत्तमो यत्करुणां निवेश्य ।
समीपमभ्यागतवानसि त्वं
तज्जीवतोऽमून् कलयामि बन्धून् ॥ 60

तनुषे मम चेत् सहायकार्यं
रजनीचारशिरोरुहावचूड ।
विललन् बहुशः समाः प्रजीवन्
निवसिष्यामि विदेहराजपुत्र्या ॥ 61

---

1. ब्रह्मणः सकाशात्प्राप्तः 2. वज्रम् 3. clear
4. प्रधक्ष्यामि ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

भो: सवयस्तव पराक्रमानलं क: सोढुं क्षमेत । तथाहि ॥

श्लो०

मायामाचरति त्वयि प्रधनगे दुष्कर्मभिश्चित्रितां
विश्वासीनविमोहनातिचतुरामालोकनीयां जनैः ।
सृष्टैर्नूतनकर्मठैः सुतरुणैर्म्लेच्छादिभिर्भीकरीं
क्षीणीयुर्भयधावनत्वममुना धैर्येण शौर्यादयः ॥ 62

नृपालपुत्रौ सुखभूमिशायिनौ
कठोरमायाशणसूत्रसंयतौ ।
विधाय तूर्णं प्रविशाऽऽलयं स्वकं
निगृह्य जन्ये स हि दुर्ग्रहो भवेत् ॥ 63

तैर्वानरैरपि धराधवपाल्यमानै-
र्जेताद्यवर्णरहितैः पुरकाननाढ्याम् ।
एतां महाद्रविणगर्वतृणीकृतेन्द्रैः
संमोचितां वसुमतीं सकलां करिष्ये ॥ 64

मित्रं तदासि हि घनाघनवर्णि[1]तात्मन्
मत्तापकारिहरिकं शमयन् फलानि ।
उत्पादयन् प्रकुरुषे बत हंसपीडा-
मुत्कण्ठयन्निशिचराननुशोचतोऽमून् ॥ 65

---

1, painted

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

एवं भवतोरनीकक्षीरपारावारकुक्षिगतयोः शाखामृगाळिनलिनीदिवाकरयोः स्वस्त्रीसंपर्कराहित्यादिव स्वैरमाव्रजन्तीमल्पितकुवलयशोभे नयनद्वन्द्वे चुम्बन्तीममन्दानन्दमुत्पादयन्तीं निद्रासुभ्रुवमुपगूह्य हेलतोर्नरवरीयसोरपसारणं प्रार्थयमानं रावणं मैरावणः प्रत्यवादीत् ॥

श्लो० –

सुहृदामुपकारनिम्नगाजलधिः खिन्नमनो हि मित्रमेकम् ।
उदयन् सविता महोत्पलेभ्यः सुषमामर्पयति क्षपार्दितेभ्यः ॥

प्रभूतदंष्ट्रस्य पिचण्डिलस्य
निजौजसोच्छ्वासयितुर्जनानाम् ।
समूलघातं परिनिघ्नतोऽरीन्
कियान्ममायं मनुवंशडिम्भः ॥ 67

विशामि कपिवाहिनीमिव करी मदाम्भःप्लुतः
करोमि परिमोहितां मम निरन्तमायाबलात् ।
नयामि बलिमन्दिरं त्वदुपकारहेतोर्नरौ-
दिशामि पुरसंपुटान्तरगकालिकायै बलिम् ॥ 68

मामुद्रिक्तबलाविष्टं निर्वाप्तुं के क्षमा जनाः ।
तरङ्गिणी झरास्फारं बडवाग्निमिव द्रुताः ॥ 69

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सखगुश्च विज्ञाय विपद्विपाव-
मेवं प्रतिज्ञाय निशाचरेशः ।
स्वस्त्यस्तु नित्यं भवते प्रजल्प-
न्निनि प्रधैर्याद्गमनं ययाचे ॥ 70

अनुज्ञातस्तेन प्रथिततरमा मन्दिरतलात्
यथोत्थाय क्षिप्रं पृथुविततपक्षः क्षितिधरः ।
जगाहे पातालं सुरपर्पविना धावितरो
बहूनां †पातालं रिपुजननदानां निशिचरः ॥ 71

इति श्रीरघुनन्दनपदारविन्दवन्दनकन्दलित
साहित्यसनाथेन रघुनाथेन विरचिते
मारुतिविजयनाम्नि चम्पूकाव्ये
**रावणप्रार्थनं नाम**
प्रथमः स्तवकः ॥

---

† an excavation.

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ अथ द्वितीयस्तबकप्रारम्भः ॥

पत्न्यै निवेदयितुमेष करिष्यमाणं
 दुष्कर्मभर्ममयभूषणभूषितायै ।
संप्राप्नवान् जयरमामित्र भाविनीं तां
 सर्वो जनो हि महिलावशगो जगत्सु ॥ 1

चू० –
 तस्याः किल रघुनन्दनशाश्वतश्रेयःपथकीलितसरलान्तः-करगायाः शुद्धान्तयुवनोरत्नभूतायाः पट्टमहिष्याः मातङ्ग-कुम्भकुचायाः मातङ्गीनामधेयाया रतिकोटिरूपधेयाया निशा-करनीकाशाननप्रकाशमानायाः निशाचर्या विशाललोचन-निशामनीभिश्चुम्बितोऽभवद् एष कर्बुरोत्तमसखः ॥

श्लो० –
 स्त्रीसन्निधानाद् दृढयोगिमोहनात्
 रात्रिश्चरोऽयं न मुमोह मानितः ।
सर्वस्तथावश्यककार्यचेतनो–
 ऽन्यस्मिन् ध्रुवं कर्मणि न प्रवर्तते ॥ 2

यल्लक्ष्यते निस्तलमङ्गनायाः
 फालान्तरे तत्तिलकं न किन्तु ।
पुरःस्थितस्यास्य घनाभवक्त्र-
 च्छाया बभौ दर्पणबिम्बरम्ये ॥ 3

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नाथस्य तस्य पदपूजनमाचरन्त्या
मञ्जीरकङ्कणमुखाः कलनिःस्वनेन ।
राजन् प्रियंवद यदिच्छसि मानसे ते
तन्माकुरुष्व जगदु. सुतरामितीव ॥ 4

वृत्तान्तोच्चरणारम्भे प्रियोष्ठपुटको बृहत् ।
नेदीयसोऽस्यालपनं जिघृक्षन्निव लक्षितः ॥ 5

चू० –

हे वरवर्णिनि जगत्प्रतीतपौरुषेणापि कालवशात्पर-विप्रकृतेन मम वयस्येन परिणताया महत्या विपत्या मामुत्तारयितुं भवानेवोचित इति संप्रार्थितस्तादृशदशानिदानभूतयोर्मनुजतनु-जयो राघवयोर्जीवग्राहनिग्रहार्थं यातुकामोऽभवं त्वया भव्यया भवितव्यमिति भाषमाणं प्रतिपदमेषा विषादादवो-चदिदम् ॥

श्लो० –

धव दशरथपुत्रौ शान्तभावौ गृहीतौ
लघु यदि भवता तौ निर्गतागःसु सत्सु ।
वलयितयमरज्जुः [1]स्पर्शिताशीविषास्यो-
द्धृत[2]धृतिरभविष्यो नीचमस्येव मर्त्यः ॥ 6

---

1. यमरज्जुस्पर्धिताशीविषास्य 2. उद्धतिधृतिः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

रघुनन्दनापहरणान्मनीषां भवान्
विनिवारयत्वसुसमः शुभंयुर्मम ।
निजसेनया शमनपत्तनं मा करो-
न्निबिडीकृतं लपितवाक् च पथ्यास्तु ते ॥ 7

तद्वाचं विषमिव मन्यमानचेता-
स्तत्प्रेयान् मम [1]निजपन्(?) निलिम्पयोगात् ।
दिक्पालान् परिभवितुं नरःप्रसक्ते-
र्लक्ष्यः किं मतिमिति चौर्य एव चक्रे ॥ 8

गूढं निशान्तं प्रतिगत्य वेगात्
रूढातिवैर्यः करमोहचूर्णः ।
स पेटिकां मन्त्रिवरैः सहास्मद्-
धृत्वा च हेमां निरगान्नगर्याः ॥ 9

दोषा चतुर्दशि(?) तिथौ दशकन्धरार्योः
स्वापं सुखं गतवतोरथ कीशमध्ये ।
वार्तां निशाटपतितस्य विभीषणाय
विज्ञापनं स्वसचिवा निशमय्य तेनुः ॥ 10

चू० —

तदानीन्तनानेहसि तदाकर्ण्य निर्वर्ण्य प्रबर्हो रक्षसां ज्ञानचक्षुषां तन्मायानुस्मरणपरशुविदीर्यमाणधैर्योर्वीरुहः मत्सखा

---

1, मलिनमतिः (?) अथवा दिक्पालान् परिभवितुं प्रकृष्टशक्तिमतो मम नरः लक्ष्यः किं इति विलपन् चौर्ये एव मतिं चक्रे इति अन्वयः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वैयात्यमुपयात्येव तेन सहाहमप्यपयास्यामीति प्रतिपन्नसहाः केसरिभैरवरवेण व्यथितो मदावल इव दिक्षु वितीर्यमाणदृष्टिः स्वर्भानुग्रस्तसमस्तगभस्तिर्दिनमणिरिव विकृतमुखशोभः प्रकम्पनोदञ्चिततुङ्गतरङ्गतरलायमानतामरससञ्चय इव कुत्रापि स्थितिमलभमानः निःश्वासमातरिश्वावचलिताधरः द्विषां भीषणाकृतिर्विभीषणः संमन्त्र्य मन्त्रिभिः समं मन्त्रं, तद्रावणसैन्यविद्रावणजातश्रमभद्रासननिद्राणतद्राजपुत्रासन्नासीनाभ्यां वनौकोऽनीकावनधुरीणाभ्यां विद्युद्द्युतिनोत्तरीयेण वालिविश्राणितेन कुशेशयहारेण विभ्राड्भ्यां निरवधिकौजोविडौजोजिल्लोपार्पितेनापर्याप्तावकाशेन समुन्मिषता समुल्लङ्घितचित्तसीम्ना हर्षभूम्ना युताभ्यां हनुमत्कपिराड्भ्यां अप्रियमिदं न्यवेदयत् ॥

तद्वचनाङ्कुशावगाहनलवितश्रवांसि नरेशमित्रे मित्रपुत्रे चिन्तातन्त्राम्नायधीमति –

[1]भीलुको विभीषणः पुनरपि मारुतिं स्तुतिपूर्वकमव्याकुलं व्याजहार

श्लो० –

प्रभञ्जनेनाञ्जनायां प्रसूत हनुमन् बलिन् ।
आमिषीकृतसप्ताश्व बर्हिर्मुखप[2]णायित ॥ 11

---

1. timorous 2. praised.

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कपिनायकमन्त्रीश त्रिजगद्धितशेमुषिन् ।
विशदीकृतविश्वास स्ववशीकृतमर्कट ॥ 12

भक्ताग्रगण्य रामस्य साधुप्राणिहितङ्कर ।
वीर्योत्सेकसमुन्मीलद्गमनाधरितानिल ॥ 13

धर्मात्मन् नीतिशास्त्रज्ञ भस्मसात्कृतराक्षस ।
वालानलभ्रमल्लङ्क कूपीकृतसरित्पते ॥ 14

आर्यारोपितसन्तोषव्याकुलीकृतसागर ।
प्लवङ्गमवितीर्णासो लक्ष्मणप्राणदायक ॥ 15

आहवार्णवमक्षोभ्यमस्माकं समुपेयुषाम् ।
दविष्ठपारं विश्वेषां त्वं नौरसि विगोपने ॥ 16

चू० –

साम्प्रतं पुनर्वचनीयमिदं संश्रृणुतां तावद्भवान् ॥

श्लो० –

प्रतिकृतिकुपितेऽस्मिश्चित्रभानाविवाब्धौ
पतति तिमिरराजिर्मन्दरस्येव दर्याः ।
स्वपति सदलतल्पे सर्वधानुष्कवर्ये
प्रमदगतखलालिर्निर्ययौ रामभद्रे ॥ 17

मैरावणाद्रावणवद्धसख्या–
इत्याहितं ज्ञानमभूच्छ्रियां नः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यत्पक्षिवर्गो विपरीत कूजित
तन्मन्त्रिवर्गैर्वद साम्यमादरात् ।। (?) 18

संचोदितो वायुज रावणेन
ग्रहीष्यति दाग्रघुनन्दनं सः ।
आगत्य धूर्ताधमलुब्धकेन
मृगं गरीयानिव विश्वकद्रुः[1] ।। 19

तस्मादेकाग्रचित्तेन
राजपुत्रौ महीयसौ (?) ।
निद्रयाऽऽलिङ्गितावेतौ
रक्षणीयौ त्वया कपे ।। 20

चू० –

इत्यसौ सत्यवानिना कृत्यविदा मर्त्यनाथत्राणनमुद्बोधयमानेनानेन तोष्टूय्यमानभुजबलमहिमैधमानसन्तोषोन्मेषसूयमानप्रसृतिशिथिलीभूतकटिवस्त्रः वालधीतोलनोत्पद्यमानपवमानतरलायमानतरुततिपतत्पतगनिरन्तरीकृतकान्तरानन्तभागः — प्रभाकरकुमारहितङ्करः[2] कुमुदनलनीलप्रभृतिभिर्जुष्यमाणः करिष्यमाणवालसालकर्णजपवि[3]ग्रहब्रह्मणः स्तनयित्नुस्तनितबन्धुना ध्वनिना हरिदन्तरं पूरयन् हरिपतिमप्र[4]ह्लन्नमाह्लादयन् प्लवगान्प्रकर्षं प्रहर्षयन् एतेषां विह्वलत्वं निराकरिष्यन् धीरः

1. A dog trained for chase 2. The God of death
3. resolution 4. Pained-distressed.

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

समीरणसुतोऽहितोत्सारणव्यग्रं निर्भीकस्तं विभीषणं गभीरम-
भाणीत् ॥

श्लो० –

लाङ्गूलेन विवर्धितेन बृहता व्योमोदरे क्षुभ्यता
युद्धे राक्षसकायरक्तपललैर्लिप्तेन घण्टाद्युता ।
वप्रं भास्करवीथिरोधि विपुलं पातालनाशङ्करं
रक्षिष्यामि विभीषणाद्ध शयितौ निर्माय राजात्मजौ ॥

शक्तिं भुजानर्तननर्तमानां
विष्णोरिव स्वां रणबद्धरागाम् ।
पश्यन्तु सर्वे च मदीयमेते
त्रिविक्रमस्येव कठोररूपम् ॥ 22

चू० –

एवमुदीर्य वीर्यवदग्रेसरमपि वैक्लव्येनावाचीनग्रीवं सुग्रीवं
प्रत्यब्रवीदुक्तीमिमाम्(?) ॥

भो भो शाखामृगप्रभो नक्तंचरप्रभोरतिशयितमदप्रसूत-
किल्बिषतिमिरदरीदिविषदरिसहचरस्य सहायमातनितुमिवा-
स्मिन्नस्मदीयनयनान्यन्धयत्यन्धतमसे ककुबन्तरालानि दिग-
वसानकृतावसथैर्विष्णुपदचरिष्णुभिश्चरणेन विना रघुपत्यपहरणं
न प्रेक्षणीयमितीव समाच्छादयति समयविपिनपपालिते

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वियन्मल्लिकागुल्मे तारककोरकनिकायानि समन्ततः समुन्मील-
यति विस्तरिष्यमाणवालसालं परितोऽन्तश्च प्रथमयामे सद्गुण-
[1]कुटारामो भवता रामः संरक्षणीयो रक्षांसि विद्राव्यानुचरै-
र्द्वितीयतृतीयतुर्येषु च क्रमशः सेनान्या सेनापालनकौतुकेनानेन
नीलेनोर्जस्वलेन वालितनूजेनातिदाढर्यवता जाम्ववता च
गोपनीयो गोपपुङ्गवः ॥

श्लो० –

उक्त्वेति वायुततुजस्तरसा शरीर-
व्याप्तेन्दुमण्डलरसातलमाशरान्तान् ।
हन्तुं द्रुतान् वलिगृहे रणभीतिलीनान्
विष्णोः पदे च ववृधे स इव क्रमेण ॥ 23

वर्धितुं किमवधीव मे वलं
वर्तते परिचिचिक्षयेरितः ।
वर्धमानतनुकं विलोक्य तं
वायुजं भुवि न को विसिष्मिये ॥ 24

हेमाद्रिर्न समानतामधिगतः सूर्योऽस्रहैन्यान्महान्
व्योमस्पृङ् न हिमालयो रघुपते नीहाररराहित्यतः ।
मैनाको न हि वर्धितावयवगः पक्षद्वयाभावतः
शश्वद् वृद्धिमुपेयुषा हनुमताप्याचन्द्रमोमण्डलम् ॥

1. A fort

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नरपालेन नगरं दानेन (कलबोधिभूः) कलभाधिपः ।
अर्केण खं महौन्नत्यात् व्यभासीदञ्जनासुतः ॥ 26

वालेन कालायसदार्ढ्यभाजा
ततान वप्रं (दिजै) दितिजैरभेद्यम् ।
महातलं संस्पृशताऽधरेण
सोग्रेण लब्धार्यममण्डलेन ? ॥ 27

रामलक्ष्मणकपीन् परितस्तान्
सज्जितः परनिराकरणाय ।
वालकेन वरणं स दवीयान्
निस्तुलं †वितलिनं प्रति वव्रे ॥ 28

निविडधूम्रतनूरुहसंहति-
छुरितदन्तुरतोज्झितवालतः ।
भुजगपुङ्गवकुण्डलतौलिका-
मनुससार ससारसमीरजः ॥ 29

द्वारं संकल्प्य तस्थौ किमपि पवनभूर्वह्निकीलोपमाक्षो
दृष्टिं विस्तार्य दिक्षु त्रिदिवपतिरिपोरागमं संप्रतीक्ष्य ।
निर्दग्धुं बद्धकच्छः खलजनसमिधो वानरा वालसालं
पश्यन्तस्तं स्वकीयैर्नियतमनिमिषैर्लोचनैस्तुल्यमापुः ॥

† sinful

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ततः प्लवगमण्डलैर्नृप परिप्लवद्भिर्नतो
नगद्रुधरपाणिभिर्विहितरामसङ्कीर्तनः ।
द्विषामतिभयानकः स च विभीषणो मन्त्रिभि-
श्चचार परितो वृतः कृतनवीनसालोत्तमम् ॥ 31

शाखामृगाः करधृताग[1]महेतिकत्वात्
रक्षांसि तानि दशयोजनमापुरन्तः ।
[2](वि)द्यो(तनै)र्घनतमांसि च धावयित्वा
सञ्चेरुरेकमिलिताः क्षणदां यथेच्छम् ॥ 32

संपूजिताः क्षितिभवैरमरा भवन्ति
स्वर्गालयैः क्षितिभुवः श्रुतमेव यन्ना[3] ।
पूर्वं कपिं प्रमदजाश्रुझरैः सिषिञ्चुः
पश्चाद्ववर्षुरमलानित[4]पुष्पवृष्टिम् ॥ 33

चू० –

तदनु बलवानप्यवलो रिक्तवक्त्राद्वालवप्राद्दूरस्थो रावणसखो मैरावणः सर्वजनविशसनबलिष्ठशक्तिः स्वीकृत-वानराकृतिस्त्वं मर्मज्ञो निरन्तराध्युषितरामोपकण्ठो दश-कण्ठानुजः संप्रति कुत्र तिष्ठति कार्तवीर्यगोत्रभिद्दोर्वीर्यापहारिणौ रणानन्दौ रघुनन्दनौ विश्वपत्राणप्रतिष्ठौ पृषदश्वसप्ताश्वसुता-विति च ज्ञात्वाऽऽयाहीत्याज्ञापयामास घटकाख्यं मन्त्रितन्त्रम् ॥

---

1. Mountain 2. विद्योतनैः 3. यन्नः ॥ 4. अमित

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तद्वालधिवप्रप्रदर्शनजायमानाद्भुतभयोभयराजबाधित – चित्तराज्यस्य वित्तेशवित्तसमुन्नतिहररावणनिदेशं पालयते नभस्वते कपिजनकाय निवेदयित्वा(?)तदन्तरावगाहनार्थं वाङ्मात्रं साहाय्यमारचयितुमिव तदन्तिकमपि गन्तुमशक्यतयोर्ध्वमुत्पतितस्योपरिप्लवनेऽचिन्त्यविक्रमः खल्वहमिति सर्वेषामीक्षयितुमिव संप्राप्तधूमयोनिवर्त्मनस्तत्राप्यन्तरमपि यातुमसाध्यतः समासादितरसातलस्य तत्रापि प्रवेष्टुमशक्यतया लङ्कामवगम्य नेत्रलक्षितवालक्षौमक्षुल्लकनिर्व्यसन – प्रसारितायतभुजकृत – सञ्चलनमोहितस्य चिरेण संज्ञामुपास्य निवर्तमानस्य भयसञ्चलितदेहतया गद्गदवचसस्तेन कोपादपध्वस्तस्य घटकस्य वाचमसूनृतां मन्वानः स यातुधान. सूचीमुखाभिधानमपरममात्यं प्रजिगाय ॥

श्लो॰ –

प्रभोः शासनमाधार्य शिरसि प्रश्रयान्वितः ।
यातुं प्रत्युपचक्राम मन्त्री रामनिवेशनम् ॥ 34

गात्रेण जग्राह स कीशभावं
बलेन निग्राहपरः परेषाम् ।
[1]असूवृजानामथ वञ्चकोऽयं
वप्रं महल्लोचनदर्शनेन ॥ 35

1. असवृजूनामथ

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सालेक्षणेनाधिगतस्मयस्य
तदा विचित्रस्य च साध्वसस्य ।
तदीयचेतस्तनुरङ्गभूमौ
स्थानार्थमुग्रः कलहोऽजनिष्ट ॥ 36

अन्तः स नीरन्ध्रतया प्रयातुं
क्षोणीविदारं बलिसद्म लेभे ।
विभीषणेनेव कराहिदष्टो
भवेयमद्धेति शुको बलीव ॥ 37

यातुनाथसचिवेन गच्छता
दृष्टमत्र विवरं न केवलम् ।
किन्तु वालवरणेऽकृतात्मना
बुद्बुदाश्च पयसां विलोकिताः ॥ 38

सूक्ष्मार्थवेदी वदनं वपायां †
प्रसारयामास स दीर्घनासम् ।
रघूद्वहस्यान्तिकमीप्सुरेष
वालं हनूमांस्तु दृढीचकार ॥ 39

सूचीमुखः साहसकार्यविज्ञः
सूचीसलोमावलिपीड्यमानः ।

† वपा = hollow, hole

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

निष्पिष्टनासां त्वरया चकर्ष
  तस्मादभून्मध्यनिकृत्तघोणः ॥ 40

वातेर्बृहल्लूमकृतस्यता (श्लथ) स्याद्
  [1]बभौ स्रवद्यावकरक्तपूरः ।
वृद्धःश्रवश्छेदितपक्षतेरिव
  झरो गिरेर्लोहितगैरिकः सन् ॥ 41

लङ्काभुवं कातरदीनचेता
  निर्वर्तितोऽस्माच्छ्लथसन्धिरेषः ।
अविन्दत द्यामिव धूमकेतुः
  समुच्छ्रितामन्दमपत्रपातम् ॥ 42

पिधाय नासां हस्तेन
  विनीय व्यर्थतां क्रियाम् ।
मुहुः पश्चादुदीक्षन्[2] स
  न्यवर्तत निशाचरः ॥ 43

घटकस्य वचः सत्यं सत्यमित्युच्चरन् गिरा ।
ज्ञापयामास सकलं त्रिभवे कुञ्चिताननः ॥ 44

चू० –

श्रृण्वतस्तस्य वचनं गृणतः पवनात्मजविश्वरूपं श्रवसा मनसा च न्यक्कारं कुर्वतः शक्त्यतिरेकतः कोपपावकश्चित्तवेदी-

---

1. सतो 2. अत्र शतन्तः चिन्त्यः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मेत्यानुचरस्य तादृशीमवस्थामवलोकयतः कर्बुरपरिवृढस्य तत्स्मरणघृतप्रसृतो जज्वाल ॥

श्लो० –

यामे द्वितीये तिमिरेण तत्र
दृष्टीरलंमुष्णति वानराणाम् ।
[1]नृपस्य (?) सूनुग्रहणैकतानो
निशाटनोऽभूदिति यद्विचित्रम् ॥ 45

निशिचरवरवेषं माययावाप्य राजन्
पिटकमुपदधानो मोहचूर्णांश्च हस्ते ।
प्लवगवरणमैषीद्वारनारीनिकेतं
मलयजमिव चूर्णं सूनमालाभुजङ्गः (?) 46

[2]नरार्यसेवावहनाऽविभीषणः
सुरार्यशत्रुः कुहनाविभीषणः ।
स रामनामानि वदन्नभीक्ष्णशः
संरक्षिणस्तांस्त्वरयन्व्यरोचत ॥ 47

प्राकाराकारमेनं तरणिसृतिरुदं(धं) जृम्भमाणं लसन्तं
कीचीः(शैः)संवेष्टयमानं रघुपतिदयितैः सान्द्रलोमाभिरामम् ।

1. नृपेन्द्रसूनुग्रहणैकतानः 2. नरार्यस्य श्रीरामस्य सेवावहनानां सेवकानां अविभीषणः (विश्वसनीयविभीषणरूपधारी) ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

उन्मील्योन्मील्य यत्नादुपरि च नयने विस्मयाविष्टचेताः
वालं (सालं) वातात्मजस्य क्षितिधरसदृशं राक्षसः संददर्श ॥

द्रष्टृभावमनाप्तोऽपि वालधि(धे)र्यो विचित्रधीः ।
नक्षत्रशेखरो राजन्नलोकत समन्ततः ॥ 49

दर्शनेन वितत्रास धीरस्तत्रापि राक्षसः ।
उत्तमस्य हयस्येव सैरिभो विपिनान्तरे ॥ 50

वायुपुत्रमथ जागरितारं
रक्षसां पतिरसावुपगम्य ।
रावणावरजवेषमुपाच्छन्
वक्तुमुक्तिमुदयुङ्क्त गभीराम् ॥ 51

रन्ध्रान्वेषणतत्पराणि हनुमन् तत्प्रातिकूल्यक्रियां
निर्मातुं रघुवंशमौक्तिकमणे रात्रौ यतन्तेऽञ्जसा ।
यातूणि(नि)द्विजमांसभुञ्जि नियतं रामं दिदृक्षुं च मां
तद्वत्ते(तद्वृत्तं)नयते च तापममितं तेनास्ति खिन्नं मनः

तस्माद्रघूद्वहावीक्ष्य(?) निर्यास्यामि परन्तप ।
कार्यवेदी हनूमंस्त्वं विजहीहि स्मृतिं मम ॥

चू० —

एवमयथार्थविभीषणो भाषमाणो विरचितरघुवरकैङ्कर्य-सत्कृतयाकृतया सरस्वत्या चार्ककुलभवमर्कानुसरणप्रवीणं तं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नैर्ऋतर्षभमेव प्रजानता अनेन पवननन्दनेन विसृताय-तेनाऽञ्जनागिरिमञ्जुलेन कलेवरेण विस्तृताङ्गुलिन्यस्तेन कौशेयसूत्रेण च कटिघटितेन सितपटेन सन्ध्यारुणिममसृणितां ह्लादिनीहृद्यकादम्बिनीं विडम्बयन् वञ्चनारूढमनस्को वञ्चक इव क्षुद्रमृगो मृगेन्द्रास्थितं गह्वरमिवाऽलर्को देवालयमिव प्राकारान्तरं प्रविश्य वितन्द्रीन् दशरथात्मजपालनधुरीणा-नन्योन्यग्रथितसँल्लापान् वानरीयवाहिनीवारिनिधिमणीन् – कपिग्रामणीन् (?) चौर्यकार्यप्रतीतिव्यग्रान् सुग्रीवादीन् असौ मायासौधतले विहरन् अनवद्यामैन्द्रजालिकविद्यां गिरि दधानः प्रधानो रक्षसां नेत्राकर्षणमन्त्रेण नेत्रपथान् रोधयन् मनःकर्षण-मन्त्रेण मनांसि लोळयन् सुधान्धसामप्यन्धङ्करणपटीयसा मोहनचूर्णेन मूर्छां शमनस्वसारं निनीयापाद्य नृपात्मजसविधं निरन्तरजप्तसान्निध्यगतमन्त्रमाहात्म्येन राघवौ स्वापावि–मोचनीयावचीकरत् ॥

तावप्रधृष्यावपि लोकपाना-
मसह्यसत्वावपि दिष्टयोगात् ।
मैरावणस्याभवतां भवन्तौ
मायाप्रणेयौ नरराजपुत्रौ ॥ 54

पेटिकामध्यवसतोः कपीनामनयोरिति ।
सांप्रतं [1]पेटिकेवैव निदध्येऽस्यां स राघवौ ॥ 55

---

[1] कपिपेटिकां (मध्यं) अध्यवसतोरनयोः पेटिकैव सांप्रतं युक्तमिति मत्या स मैरावणो राघवौ तत्र निदधे ॥ पेटिकैवेति ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

उन्मील्योन्मील्य यत्नादुपरि च नयने विस्मयाविष्टचेताः
वालं (सालं) वातात्मजस्य क्षितिधरसदृशं राक्षसः संददर्श ॥

द्रष्टृभावमनाप्तोऽपि वालधि(धे)र्यो विचित्रधीः ।
नक्षत्रशेखरो राजन्नलोकत समन्ततः ॥ 49

दर्शनेन वितत्रास धीरस्तत्रापि राक्षसः ।
उत्तमस्य हृयस्येव सैरिभो विपिनान्तरे ॥ 50

वायुपुत्रमथ जागरितारं
रक्षसां पतिरसावुपगम्य ।
रावणावरजवेषमुपाच्छंन्
वक्तुमुक्तिमुदयुङ्क्त गभीराम् ॥ 51

रन्ध्रान्वेषणतत्पराणि हनुमन् तत्प्रातिकूल्यक्रियां
निर्मातुं रघुवंशमौक्तिकमणे रात्रौ यतन्तेऽञ्जसा ।
यातूणि(नि)द्विजमांसभुञ्जि नियतं रामं दिदृक्षुं च मां
तद्वत्ते(तद्वृत्तं)नयते च तापममितं तेनास्ति खिन्नं मनः

तस्माद्रघूद्वहावीक्ष्य(?) निर्यास्यामि परन्तप ।
कार्यवेदी हनूमंस्त्वं विजहीहि सृतिं मम ॥

चू० –

एवमयथार्थविभीषणो भाषमाणो विरचितरघुवरकैङ्कर्य-
सत्कृतयाकृतया सरस्वतया चार्ककुलभवमर्कानुसरणप्रवीणं तं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नैर्ऋतर्षभमेव प्रजानता अनेन पवननन्दनेन विसृताय-तेनाऽञ्जनागिरिमञ्जुलेन कलेवरेण विस्तृताङ्गुलिन्यस्तेन कौशेयसूत्रेण च कटिघटितेन सितपटेन सन्ध्यारुणिममसृणितां ह्लादिनीहृद्यकादम्बिनीं विडम्बयन् वञ्चनारूढमनस्को वञ्चक इव क्षुद्रमृगो मृगेन्द्रास्थितं गह्वरमिवाऽलर्को देवालयमिव प्राकारान्तरं प्रविश्य वितन्द्रीन् दशरथात्मजपालनधुरीणा-नन्योन्यग्रथितसँल्लापान् वानरीयवाहिनीवारिनिधिमणीन् –कपिग्रामणीन् (?) चौर्यकार्यप्रतीतिव्यग्रान् सुग्रीवादीन् असौ मायासौधतले विहरन् अनवद्यामैन्द्रजालिकविद्यां गिरि दधानः प्रधानो रक्षसां नेत्राकर्षणमन्त्रेण नेत्रपथान् रोधयन् मनःकर्षण-मन्त्रेण मनांसि लोळयन् सुधान्धसामप्यन्धङ्करणपटीयसा मोहनचूर्णेन मूर्छां शमनस्वसारं निनीयापाद्य नृपात्मजसविधं निरन्तरजप्तसान्निध्यगतमन्त्रमाहात्म्येन राघवौ स्वापावि–मोचनीयावचीकरत् ॥

तावप्रधृष्यावपि लोकपाना-
मसह्यसत्वावपि दिष्टयोगात् ।
मैरावणस्याभवतां भवन्तौ
मायाप्रणेयौ नरराजपुत्रौ ॥ 54

पेटिकामध्यवसतोः कपीनामनयोरिति ।
सांप्रतं [1]पेटिकेवैव निदध्रेऽस्यां स राघवौ ॥ 55

---

[1] कपिपेटिकां (मध्यं) अध्यवसतोरनयोः पेटिकैव सांप्रतं युक्तमिति मत्या स मैरावणो राघवौ तत्र निदध्रे ॥ पेटिकैवेति ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

[1]युवाभ्यां विधितो वासो रत्नप्रच्छन्नपेटके ।
तेन[2] रक्षःपतेः कक्षे विधिर्हि दुरतिक्रमः ॥ 56

नगरमाशु विवेश रघूत्तम-
ग्रहणसंभवहर्षसमुन्नतिः ।
[3]विधिंचरो निजमेव निकेतनं
मुषितभूरिधनो व[4] मलिम्लुचः ॥ 57

हाटकायतनोपेतमल्पते येन मन्दिरम् ।
देव्या निवेशयामास भवने [5]राम पेटिकाम् ॥ 58

मातर्मया व्यवसितं ननु मित्रकृत्यं
तत्साधितं त्वदनुकम्पिकया प्रभाते ।
दास्यामि ते [6]सुतयुगं बलिमेतदुक्त्वा
शुद्धान्तमेवमविशद्भृशजागरूकः ॥ 59

रघुवर्यसङ्ग्रहणवृत्तमिदं
[7]श्रवणेन विष्टपशुचः करणम् ।

---

1. इदम् अगस्त्यवचनं रामं प्रति इत्यतः युवाभ्यामिति सङ्गच्छते । विधिवशात् युवाभ्यां रत्नप्रत्युप्तपेटके वासः तेने इति ॥
2. तेने ॥ 3. निशिचरो 4. इवार्थे व शब्दः ॥
5. रामेति कुम्भसम्भवकृतं संबोधनम् ॥
6. नरयुगं बलिमित्युदीर्य शुद्धान्तमाविशदसौ भृशजागरूकः ॥
7. स्मरणेऽपि

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्रवणावतंसितमभूत् सकलं[1]
पिशिताशिनां दुरयनाश्रयिणाम् ॥ 60

[2]दुर्जनेन स परिग्र(?)हीतयोः
शम्भुधातृमुनिदेवतास्तयोः ।
भीतिमापुरधिकां विचिन्त्य त-
द्भाविकार्यसहाम्वुधिम् (?) ॥ 61

मैरावणेन हृतयोः सुतयोर्नृपस्य
युग्मस्थलं वितरलं युगलं विवेश ।
शोको जिगीषुहृदयान्वितवानरादीन्
हर्षो दशाननमुखान् किल यातुधानान् ॥ 62

इति श्रीरघुनन्दनपदारविन्दवन्दनकन्दलितसाहित्यसनाथेन रघुनाथेन विरचिते मारुतिविजयनामनि चम्पूकाव्ये राघवापहरणं नाम द्वितीयः स्तबकः ॥

---

1. श्रवणावतंसितमभूत्सकलपिशिताशिनाम् ॥
2. दुर्जनेन परिसङ्गृहीतयोः शम्भुधातृमुनिदेवतास्तयोः । भीतिमापुरधिकां विचिन्त्य तद्भाविकार्यगतिमत्यदुष्कराम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ अथ तृतीयस्तबकः ॥

श्लो० –

प्लवङ्गमानामथ सङ्गतानां
रघूत्तमग्रस्तमनोऽम्बुजानाम् ।
हा हा स पातालपलाशनेता
घनाघनोऽभूदधिशोकहेतुः ॥ 1

वप्रपश्चिमतले विभीषणं
घूर्णितं कपिभटैः कुटायुधैः[1] ।
क्रूरदुःशकुनकानि भेजिरे
मत्तवारणमिवालयो वने ॥ 2

तदनेहसि द्रुतममुं प्रमदः
शकुनेतरेक्षणपरं व्यसृजत् ।
[2]शकुनव्रजो निशिदिनी (निशीथिनी-)
चरमे तृणसंव्र(वृ)तं कुलायमिव ॥ 3

त्वरितं पवनात्मजोपकण्ठं
विकृतं वक्त्रमुपादधच्छुचा सः ।
ज्वलने ज्वलिते निधाय शोभा-
मिव भेजेऽस्तगिरिं तमःसपत्नः ॥ 4

---

1. गदायुधैः 2. पक्षिसङ्घः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दानवारिगणसेवितं कविं
तापनाशनकरं मनोहरम् ।
स्नेहशोभिरघुवर्यदर्शनं
पृष्टवानिति स यन्न साधु तत् ? ॥ 5

नाथमानं निशाचारनाथमानच्छिदं विभुम् ।
आलोकयन्तं तं शङ्का ययौ मारुतिनन्दनम् ॥ 6

केको वियातस्य मरुत्सुतस्य
विलोळयामास मनोऽप्यमुष्य ।
राजन् शरत्कालविकल्मषस्य
पद्माकरस्येव जलं [1]लुलायः ॥ 7

चू० –

स किल कमलिनीदलमध्यगत[2]शम्बरबिन्दुरिव स्यन्दमानमनाः निष्कर्षाविनिरुह्यारोहणतर्षः कपिरवदत् "इदानीं देवादिदुरासददाशरथी निर्वर्ण्य निर्गतोऽसि किमर्थं पुनरागतः पुण्यजनवरेण्ये"ति ॥

श्लो० –

तद्भाषणश्रवणवातचयैधमाने
शोकानले ज्वलति यातुवरीयसोऽस्य ।
मूर्छोरुधूमवलितेऽपि [3]हृदम्बरीषे
स्नेहक्षयोऽजनि न चित्रमितः किमस्ति ॥ 8

1. महिषः ॥ 2. जल 3. हृत्पात्रे (हृदये) ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

निद्राया वशकौ (गौ) रघुवर्यौ
सत्यं तौ मुषितावहितेन ।
मेधावी पवनात्मजमार्य(र्यो)
निश्चित्यैवममुं निजगाद ॥ 9

वायुपुत्र कठिनस्तव यत्नो
राघवावनफलः फ(प)रिनन्द्यः । (?)
ऊषरप्लुतधरागतधान्य-
व्रातसाम्यमुररीचकार हा ॥ 10

मायावी जगतां बलेन परमं यः पीडनं कुर्वते(?)
(परमां पीडां विधत्तेऽद्य नः)
मैत्र्या पङ्क्तिमुखरेमयं (पङ्क्तिमुखे स्वयं)
निजगृहे सन्दोप्ट्चक्रुत्यास्पदम् ।
मन्नेपथ्यमुपेत्य मंचु(मङ्क्षु) हनुमन्नुद्ग्राहितौ राघवौ
तथ्यं तेन निलिम्पयोगमदितं (सहितं, पिहितं)
को वा निरस्तुं क्षमः ॥ 11

उद्यमं विसृज रौद्र महान्तं विद्यमानमुत पावकवर्य(र्ये)
अद्य भूतिहुतगव्यसमानं पन्नगोऽद्रिकटकस्त्वचमेवम् ॥
(अद्रिकटके त्वचमेवम्) 12

तद्गिरा हतसन्तोषसमुदीर्णमनोयुतः ।
पश्यन्निव दिशि भ्रान्तो मारुतिर्न व्यरोचत ॥ 13

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ह्रस्वीचकार तनुमप्रतिमप्रभावो
द्राघीयसीं पवनभूर्विफलप्रयासः ।
मोहं विहाय मिषतां कुमुदादिकानां
त्रासाङ्कुरं झटिति तज्जनयाम्बभूव ॥ 14

चू० —

तदाप्यविमुच्यमानवैयात्यो दुर्मनाः सङ्कुचितललामो-ऽप्यलघुललामो निजयूध[थ]स्कन्नः कुञ्जर इव स कदुष्म(ग) नासानिलहुङ्कारः शोकामयातिरेकेणैव सम्भावितदेहकार्श्यो नष्टमाणिक्यो [1]मान [?] इवाभूत्सम्भूतकृत्याकृत्यविपर्ययः प्राकृतवानर इवातनूमान् हनूमान् ॥

श्लो० —

पुरा निलीयते वातिर्विह्वलः सैन्यकानने ।
द्विरदालाभविश्रान्तः केसरीव गुहोदरे ॥ 15

संसरन्तं हनूमन्तं तमन्वविशदुन्मनाः ।
शिशोधिषुर्विवृत्ताङ्गो निश्चित्तं स विभीषणः ॥ 16

क्रव्यादवर्यानिलिदृष्टिगोचरैः—
रभावि कृत्स्नैः कपिनायकादिभिः ।

---

1, मानीव सिंह्य इव ।

विभीषणमारुतिदृष्टिगोचरैः सर्वैः कपिनायकैः पूर्वं दृष्टाभ्यां राज-कुमाराभ्यां कृते कल्पितेन शयनेन केवलं तत्र नवपल्लवावृते स्थले अभावि । राजकुमारौ न दृष्टौ ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विलोकिताभ्यां नवपल्लवावृते
    नृपात्मजाभ्यां शयनेन केवलम् ॥ 17

रघुवरविरहेण शोचमानौ
    पवनपुलस्त्यसुतौ जुहोल[1]तुस्तौ ।
भुवि गलितरवौ निपात्यमाना-
    ववनिरुहाविव वायुमण्डलेन ॥ 18

आश्लिष्टभूम्योरनयोर्मनस्तः
    संज्ञा तयोर्निश्चलदङ्गभाजोः ।
संमार्गितुं राक्षसनीयमानौ
    राजन्यपुत्रादि (वि) व निःससार ॥ 19

वातूलचोदितविमेदुरवारिवाह-
    वर्षादृतो विपिनवह्निरिवास्तकीलः ।
शोकातिरेकसलिले विहितावगाहो
    वातात्मजः स शमनं क्षणिकं जगाहे ॥ 20

अथ वानरनायकादयः
    प्रययुस्तां [2]कसुताश्रितां दशाम् ।
रघुवर्यवियोगजव्यथा-
    [3]परशुत्वष्टमनोमहीरुहः ॥ 21

---

1, जुहुलतुः इति स्थाने प्रयोगोऽयम् ॥ (Concealed)

2. सूर्यसुतेन यमेन आश्रितां 3. छिन्न

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्लवङ्गसैन्यं सकलं महात्मन्
   मैरावणेनैव हृतासुवायु ।
निश्चेष्टमासीद्विपदं समेत्य
   शुचेव सिन्धुर्गतभङ्गनादः ॥ 22

रिपुपराजितखिन्नवनौकसां
   गतिरेक(का)जनार्तिविधायिनी ।
हरिपदेऽजनि कर्मविधातनो
   बत बतेति नभश्चरनिःस्वनः ॥ [?] 23

सज्जनानन्दभिदुरा[1] राजन् पीडा च शर्वरी ।
अमीषां कवि[पि] कूटानां दीर्घतामाप मुख्यतः ॥ 24

पुष्टकोकतद [त] ये सुखप्रदा
   राजहीनविदुराविराजिता ।
संभृतातितमसा वनौकसां
   सेनया सदृशतामगान्निशा ॥ 25

रामं विना वर्तितया वाहिन्या वातिगुप्तया ।
सन्त्रासोत्पादिनी रात्रिर्बभूव भृशमूर्च्छिता ॥ 26

दीर्घश्वासश्वसननिगरक्षोभवीच्यां महत्यां
   मूर्च्छानद्यां विहिततनुकामज्जनोन्मज्जनः सन् ।

---

1. Destroying

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कृच्छ्राद्व्रजे प्लवविरहितः पार्षदश्विः सहैतैः
संज्ञापारं सकलकपिभिः संवहन्धीरभावम् ॥ 27

चू० –

ततस्तेऽतिव्याकुलतया द्गद (गद्गद) भाषिणो बक-कदम्वानिसृत [वाक्कदम्बदमननिःसृत] [1]कबन्धपङ्किलभूमयः कपीशजाम्ववदादयः फेनिलास (सु) विवरालोलितभुजार्गला धरायामपस्माररोगिण इव पर्यवर्तन्त ॥

मर्कटवृक्णनक्तश्चररक्तजलस्य काशनीकाशकीकसशङ्खस्य विच्छिन्नस्पन्दनपानपात्रस्य प्राणप्रयाणकालसमुच्चलत्कबन्ध–पाथश्चरस्य जन्यावन्यर्णवस्य द्वीपायमानमतिरिक्तशोकावग्रह-ग्रस्तप्रभं ससुग्रीवादिकसालावृकानीकमुच्चैरुत्क्रोशच्चक्रवाल-मिवोच्चैश्चुक्रोश ॥

हा राम हा राघव दीनपाल
निहत्य शत्रून् युधि रावणादीन् ।
सीतामनाप्तः[?]कुलपालिकां तां
त्वं दूयमानां क्व गत [:] क्षणेन ॥ 28

त्यक्त्वापि राम तव कार्यकृतेऽसुत्रायून्
कर्तुं सुनिश्चितधियो विहितान्समर्थान् ।
अस्मान् विहाय शरणं भजतः प्रभुं त्वां
कुत्र प्रयातमधुना भवता नरेन्द्र ॥ 29

1. अश्रुप्रवाह

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

साम्राज्यसौख्यकर नः सबलाग्रयायिन्
रामार्यं पुण्यजनवश्य इति प्रसिद्धिम् ।
यातुं द्विधा त्रिभुवनेषु महाप्रभावा [त्]
किं कौणपेन भुजपञ्जरसंवृतोऽभूः ॥ 30

त्वं सत्समूहपरिपालनबद्धसन्धो
राजापि सत्वरमिरावतिजन्मभूमिः ।
अस्माननपास्य सुहृदो निशि शार्वराप्त-
श्चित्रं दुरूहविधियोगवशादुपासीः ॥ 31

भग्नोऽयं सुमित्रो [तो] मनोरथतरुर्भग्नो महानुत्सवः
भग्नं रावणनाशनं परिणतं भग्नो बहुर्नः श्रमः ॥
[बहूनां श्रमः]
भग्नो धैर्यगुणस्त्वदाश्रयवतां भग्नं महो [ही] जीवनं
जातो राम विधेर्वशात्त्वयि विभो क्रव्यादहस्तङ्गते ॥

याते रघूत्तमतरौ वयमेव शाखाः
सीताफले प्रमदनिर्भरपुष्परम्ये ।
वासस्थले नतनूणां भवतापितानां
मूलेन [निवस्तुं] वस्तुमवनौ न हि शक्तिमन्तः ॥ 33

विनाब्जेन सरः श्रेष्ठो [श्रेष्ठं]
विनाब्जेन विभावरी ।
विना विना पञ्जरान्तो
न भामि भवता विना ॥ 34

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मायाभुजङ्गौ रजनीचरस्य
पुष्टौ ददंशात्र युवां नरेन्द्रौ ।
तत्केवलं राति पुरुं न शोकं
चित्रं च वीर्याधिकशालिनां नः ॥ [?] 35

लोके लोकामहे भूरि सुखं भवति धर्मिणाम् ।
पापिनां दुःखमस्माकं प्रतीपे ते बभूवतु. ॥ 36

रामेति दीनकरुणेति गिरं वदन्तं
त्वं रक्षसीति भुवनेऽजनि किंवदन्तिः ।
यत्तन्मृषा नरवरेति च राघवेति
नः क्रोशतां विषयतां न दृशां प्रयासि ॥ 37

योऽयं कपीनामभयप्रदानं
चकार सेतुं जलधौ मुहूर्तात् ।
लङ्कां श्मशानं परिशङ्कनीयां
स नः परोक्षः किमु कर्म कुर्मः ॥ 38

यस्य प्रतापान(ल)कीलजालं
पुरीषु सर्वत्र वितायमानम् ।
स म्लानतामेव ददौ रिपूणां
प्रवृद्धशक्तित्रयवल्लरिभ्यः ॥ 39

स रावणो बाहुनिविष्टवीर्यं
यस्यावसोढुं क्षमतामगच्छन् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सङ्कल्प्य सेनां रणदेवतायै
बलिं दिगन्तानपि धावति स्मः ।। 40

तेन त्वया विहीनानामस्माकं रुदतां मनः ।
तपतीदमयःपिण्डमिव वह्निप्रतिष्ठितम् ।। 41

बाधेन प्रचुरेण साकमगमन्नोऽसावरं यामिनी–
ध्वान्तालिः सह रावणापयशसा व्याप्नोति सर्वा दिशः ।
कष्टं भावि न वीक्षणोयवि(मि)व गौरस्तेतरं नो गतः
सूनुभ्यां रघुनन्दनस्य वसुमान् सूरः स ह्यन्तर्दधे ।।

एषा तमो दाशरथेऽस्मदीयान्
प्राणान् ध्रुवं चोरयितुं प्रवृत्ता ।
निरागसो नः परिपीडयन्ती
भृङ्गानतश्चम्पकमञ्जरीव ।। 43

चू० –

एवमेतेषामसङ्कोचं शोचतां परिच्युतधृतीनां सुग्रीव-प्रभृतीनां †प्रज्वलिष्यदनलदूनलोहायमानान् (?) वृन्दारकजन-करणेषु शीतलामृतवर्षायमानानमृतरिपुषु परशुकायमानान् श्रोतृजनमोदपादपभिदायां जीवातुवरायमाणानतिशयविपदामय-जर्झरितरावणादिषु मृगयुगानायमानान् विटपपटलान्तरगत-पतदुद्रावणे क्षयकालकालवशंगमिष्यदाक्रोशत्प्राणिनिर्ह्लादप्रति-

† चूर्णिकेयं यथामातृकं प्रकाश्यते ।।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

मान्, सहाहाकारानुच्चावचान् विलापनिःस्वनानाकर्ण्य दिक्-सुन्दरीष्वनुक्रन्दतीष्विव विभीषणनुतिविषयीभूतपराक्रमाक्रमित-गात्रपाटवपरिचिचिक्षयेव स्फुटं विरचितभुजास्फोटनः पूर्वं मया तनुवृध्या यावदवधि नभोऽन्तरालं व्याप्तं तावत्पर्यन्तं गन्तव्य-मितीवोत्प्लवमानः विषण्णवानरदुःखैकहेतुपरिहरणकृताट्टहासः विभावसुः सीतालपनकमलस्य, शमनो निशाचरहनने, निशाचरो निशचरीमुखबिसप्रसूनस्य, पतत्रिराजो निर्यत्नप्लवने, जातेषु द्विजन्मेव मृगाणां मृगेन्द्र इव, द्रुमाणां बोधिद्रुम इव प्लवङ्गमानां प्रवर्यः शोकपरम्परातरङ्गिणीतरणे प्लवायमानं धैर्यगुण-मवलम्बयन् सुग्रीवादिश्रवणकुहरेष्वघतापनिरसनशंसिनीं सुधा-धारां सिञ्चन् मानवाग्रेसरदूतो हनुमानवादीत् ॥

श्लो० –

पातालं भुजदण्डयुग्मविलसद्भूरिप्रतापाग्निना
दग्ध्वा तत्पतिमन्तकालयगतं कृत्वाञ्जसा वानराः ।
आनेतुं तदिदं स्थलं रघुसुतौ सामर्थ्यवानस्म्यहं
मार्गश्चेत्कुणपाशनस्य विदितः सूक्ष्मो मया दुर्लभः ॥

चू० –

इत्थमाचक्षाणं लक्ष्मणाग्रजदूतं वातात्मजं "तदयनमहं दर्शयिष्यामि, मामनुव्रजे"त्यभिधाय निधाय च रक्षसि रौक्ष्यं रघुनन्दनौ मार्गमाणः पदन्यासाङ्कितत्रिंशद्योजनदूरः स यातुवीरः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

निर्भरजातमुकुलैर्वकुलैर्लतागृहोटजैः कुटजैश्चञ्चच्चञ्चरीकपटलैः पाटलैः नीरन्ध्रोद्वेगपूगैः पूगैः कोमलप्रवालमालैस्तमालैः – विरहिजनतापकरसुमांशुकैः किंशुकैर्निर्यन्निर्यासिमदगन्धैः पिचुमन्दैरध्वनीनपरिश्रान्तिविश्रान्तिकरमूलतटैर्वटैर्विटपलीलाडम्बरै – रुदुम्बरैः कुड्मलमञ्जुलैर्वञ्जुलैरधिकामोदनन्दनैश्चन्दनैः परिमलानुमेयवधूकैर्मधूकैर्वियच्चरचित्ताकर्षणसमर्थपचेलिमफल - गन्धरसैः पनसैर्निकुञ्जशयालुदन्तिकाभिर्दन्तावलवल्लभपल्लवाभिः सल्लकीभिरभिनिपतदलिभिः कदलीभिः प्रसभशलाटुपिहितपत्लवव्रातैश्चूतैः पांतमन(पान्थमनः) कंपकैश्चम्पकैरेतैरन्योन्यसम्बन्धिभिरुदग्रां लङ्कामभिभवितुमिवोच्छ्रितैरनेकानोकहनिवहैर्निविडितं कुटभञ्जनपटुभिरुद्गीर्णपुष्करैः पुष्करैरुपलक्षितैर्निरन्तरनिष्पन्दमानदानत्वादिवाऽऽपीततोयानि वमद्भिरिव करेणुसंहतिपरिचयैः करिचयैरशनार्थं सन्ततेप्सितगोशार्दूलैः शार्दूलैरविरतजृम्भितक्षुद्भिस्तरक्षुभिर्भल्लगणदुर्लभैर्भल्लूकैः – कीर्णावनिदत्तप्रगाढैः क्रोडैर्गन्धर्वविद्वेषैर्वनमहिषैः प्रत्यवसितपिशितखण्डैः खड्गैः कृततुमुलरवैः फेखैश्च[1] दुष्प्रवेशं काश्मीरजन्ममयलङ्कापुरवरणादौ(दि)विसृमरतेजः – प्रद्रुतपुञ्जीभूतंतम इव नीलत्वात्, रुद्रविदार्यमाणकाननं वनौकस्त्वाद्धनूमन्तमनैषीत् ॥

श्लो० – तेनायं सह हनुमान् विवेश जेता कान्तारम् ।
कमलसमूहरक्षितारं ... ... ... पोष्टारम्
शिवानां साधर्म्यं भयमपां निधेर्वहन्तम् ॥(?) 45

1. जम्बूकैः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

अरण्यपरिसरपरिकीर्ण्यमान (परिकीर्ण) पुरुफलवासनया समाहूत इव तत्प्रविश्य वावदन्तौ सन्तौ यावो यद्ययनमयाममपि (यात्रो यद्ययनमायाममपि) सङ्कुचितं भविष्यतीत्यालोच्यैव तंवेरम (स्तम्बेरम) मस्तकपाटनबद्धस्पृहं कंटी(ठी)रवमिव [दिदिशिशि?] तं निष्ठ(तन्निष्ठ)गरिष्ठशाखिशाखारोहणादि-क्रीया (क्रियासु) स्वजातिविपरीताभाव (स्वजात्युचित) चेष्टां प्रकटयन्तं तं काष्टेशपुत्रमाचष्ट ।।

श्लो० –

येते (एते) स्वर्णसमानकान्तिभरिता व्योमस्पृशः पादपा
लङ्कानाथभयादवायुचलिता नीरन्ध्रपर्णान्विताः ।
किर्मीलीकृतदिग्विसारिविटपाः प्रोन्मूलयन्ति क्षणात्
पुष्पव्रातरुचा स्वयैव हनुमन् शोकं महान्तं मम ।। 46

भूमौ वर्णेन वह्नेः सदृशि विपृपिनो धूमधूमायमाना
नीहारक्लिन्नशाखा भृशपिहितदृशो व्योमकुक्षि
लिहन्तः ।
खद्योतैः कान्तिपुञ्जव्य[1]धरितभगणैरात्मपत्रेषु लीनैः
वातापत्यस्फुरद्भिर्हरिपदसमतां पश्यतां बिभ्रतीव ।।

---

1. वि + अधरित (विशेषेण अधरीकृत) ।। वातापत्य स्फुरद्भिः - आरूढेन मारुतिना प्रकाशमानैः वात + आपत्ति + अस्फुरद्भिः इति च ।।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वकुलतरुपुमांसः काङ्क्ष्यमाणप्रसूनाः
गगनपथचरद्भिर्दे(दैं)वतैरप्सरोभिः ।
वितरितुमिव शाखा विस्तृता दिग्वधु(धू)भ्यः
कुसुमचयमकुर्वन् पश्य वातात्मजामि(भि) ॥ 48

एष रक्तसुमच्छायः पलाशधरणीरुह. ।
शङ्कां तनोति मे रामहृतयातुतनूमिति ॥ 49

वल्लीलतावेष्टितमस्तकेषु
त्वं मेऽत्र पिङ्गप्रसवान्वितेषु ।
प्राप्तेषु नम्रेष्वधिचम्पकेषु
निधत्स्व पुष्टिं कपिवर्य दृष्टिम् ॥ 50

पाटलैर्मरुदुद्धूतैरात्मीयैः पुष्पसञ्चयैः ।
भूभागो वनदेवाय कृतशय्य इवेक्ष्यते ॥ 51

स्तवकास्तरोरमलिना निजधूलिधूसरितदिग्वलयाः ।
वृहतो दलानि परितस्तरिरे प्रवरः प्लरान्हि(?)
समधःकुरुते ॥ 52

राजिताक्षिकुसुमैर्मधुव्रतै–
र्गर्भलब्धशिततारकैः स्त्रियः ।
वीरुधः फलकुचा वनस्पति–
स्कन्धसक्तकरपल्लवा इव ॥ 53

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शुका विगतनिस्वनास्तरुगणेषु लीना भया-
दृशाननसखादिव त्रसदशेषलोकादमी ।
दिवान्धसि(शि)तचञ्चुभिः कृतव्(व्र)णा रणन्ति द्रुतं
स याति(?)रघुसत्तमाविति निगृह्य वा वायसाः ॥54

मृद्वीं गिरं जनकभूपतिपुत्रिकाया -
आकर्ण्य कर्णपुटसौख्यविधायिनीं वा ।
एषा वनप्रियततिस्त्रपया महत्या
तूष्णीं बभूव निजदम्पतिभावरम्या ॥ 55

वातावधूतविटपाग्रजुषां हिमानां
भूमौ पतन्ति पृषतः शिथिलीभवन्तः ।
दुष्प्रापमुन्नतपदं पतनाय हेतु-
रल्पीयसां प्रति हि नाविति बोधयन्तः ॥ 56

चक्राभिधानवहना नभसङ्गमा ये
स्त्रीन्यूनजन्य-विरहानलतप्यमानाः ।
रात्रौ कुटे कटु रटन्त्यतिनिक्षवो वा
बन्धुप्रभाकरकुलोद्भववैपरीत्यम् ॥ 57

काश्मीरजन्मधरणिप्रसरन्मरीचि-
वीचोपरिज्वलितवृक्षमवेक्ष्य वेगात् ।
निद्रां द्रवन्ति परिमुच्य दवाग्निरुद्ध-
वन्येयमित्यतिभयाः परितो मृगाद्याः ॥ 58

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

द्वीपिजालं न गोनादं सहते नखरोज्ज्वलम् ।
द्विपोदं तं वहन् हस्ती सहते न करोज्ज्वलम् ॥ 59

भल्लूका निकटशयालवो महान्नः
संबिभ्रत्स्वसिततनूरुचा हनूमन् ।
लङ्कायाः स्फुरितरुचा द्रुता वनान्तं
सपनास्तिमिरगणा इव व्यरोचत् ॥
[सापत्न्यात्तिमिरगणा इव व्यरोचन्] 60

स्वापप्रणेयतामाप्ता भूतटन्यस्तमस्तकाः ।
गुहागहनगर्भस्था व्यादितास्या मृगादनाः ॥ 61

दर्पद्विषद्द्विरदशीर्षविदारलब्ध-
मुक्ताफलप्रकरमन्दिरकन्दरान्ताः ।
सर्वद्विजप्रकुशलाधिगताजिपक्षाः [... ... रिपक्षाः]
सुप्ता नृपा इव पुरो हरयो हटन्ति[1] ॥ 62

दिवसमुदितभूरिदुष्टजन्तु-
द्विजरवशब्दितदिक्कुलं यदासीत् ।
पवनसुत गतं निशीव निद्रा-
मपनिनदं तदिदं विलोकय त्वम् ॥ 63

---

1. हटन्ति प्रकाशन्ते ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

एवमेष प्रकारान्तरव्याहारलवित्रेण स्वस्य च हनूमतो रघुपतिवियोगवारिवर्धितां निःश्वासकिसलयितां व्यथावल्लरीमुच्छिन्दन् राघवौ तत्र तत्र गवेषयन् जगत्प्राणतरलितमृदुलप्रवालाङ्गुलिप्रज्वलद्वीरुच्छायायाः पादपादपवत्या अटवीतटीचिरण्टया नाभि निव्रीशसै[निबिरीसै[1]]स्तीररुहैर्नक्षत्रद्युतिमपह्नुवानां रक्षोभिरक्षोभितक्षीरसमेतां नीरवदलिनीं कामपि नलिनीं रभसादाशिष्ट ॥

श्लो० –

विभीषणहनूमद्भ्यां विचिन्वद्भ्यां समन्ततः ।
नापादि तद्वने क्वापि रामलक्ष्मणवीक्षणम् ॥ 64

इति श्रीरघुनन्दनपादारविन्दकन्दलितसाहित्यसनाथेन रघुनाथेन विरचिते मारुतिविजयचम्पूकाव्ये

**राघवान्वेषणं नाम**

तृतीयः स्तवकः ॥

---

1. निबिडितैः

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ चतुर्थः स्तबकः ॥

वातपोतहितभङ्गशयाग्रै-
रर्घ्यपाद्यमिव दित्सुमुदारम् ।
वारिजन्यरवतो दधतं वा
स्वागतं भवुकवाञ्चमितीव ॥ 1

चारूदकैर्हरितकैरधिवृद्धिमाप्तैः
संसर्गमेत्य मरुतश्चलितैः प्रमन्दम् ।
कान्त्याऽवमानितदिनेशहयैः परीतं
सोपानितं मरकतैरिव काङ्क्ष्यमाणम् ॥ 2

विकसनमपि धीर्गतानि किञ्चि-
द्रतिसुखसङ्गतिमन्दमील्यमानैः ।
सुयुवतिनयनैरितानि साम्यं
कुवलयकानी(नि)वहन्तमन्तसीम्नि ॥ 3

क्वचिदवनिरुहैरशोकनाम्ना
परिणमितैर्द्रुतहैमपिण्डवर्णैः ।
समधिगततटैर्नतैर्हरिद्रा-
जलयुतकुण्डमिव ज्वलन्तमेनम् ॥ 4

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

संरक्ततामरससंभृतराजमान-

छत्रेषु पत्ननिचयेषु विशङ्कटेषु ।

निद्रालुमध्वनि सितच्छदयोर्यथेच्छ-

मालिङ्गितस्ववपुषो मिथुनं दधानम् ॥ 5

जगदिदमवलोकितुं पयांसि

स्फुटमवदार्य रसातलोत्थितानि ।

विषधरपटलानि पङ्कजान्या

धृतमिवसंमुकुलीभवन्मुखानि ॥ 6

जलनिधिपरिणाहमाप्नुवन्तं

मकरकुलैः परिषेविताम्बुमध्यम् ।

पवनसुतयुतो विभीषणोऽयं

कमपितटाकमुदैक्षताधिरात्रम् ॥ 7

चू० –

अथ रक्षःपथमीक्षयिष्यन् भूयोऽपि व्याजहार पौलस्त्यानुजस्तम् ॥

श्लो० –

रामस्यार्थे पतिकुलभुवो बान्धवस्य प्रकामं

नीहारास्त्रं कमललपना पद्मिनीयोषिदेषा ।

संमुञ्चन्ती शितिनलिनदृक्छैवलाच्छादनेन

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

आमीलेन स्थगितजललवानू(?) रोदितीवास्ति पश्य ॥ 8

चू० —

अस्यां खलु सरस्यां दिविषदृषभदृषद्रुपमपानीयभासि-हंसावतंसोकसा मानससरसा समायां मदीयपानपात्रपाथोऽन्यो मृगो न धयत्वितीव तीररुहतरुभ्रंशिभिः पर्णकुसुमसार्थैस्तन्मूल-वासिना द्वीपिना समाच्छादितायां तिमिङ्गिलबलधुरीण-कुम्भीरकुम्भीनसमेदुरीकृतायां स्फटिकशकलविकारसिकत — निकरायां, गभीरदुरवगाहायामत्युद्गतनालस्य मूर्तिमतीनां रात्रिश्चरापकीर्तीनामिव राजीवराजीनां च राजत्वमधिगत्येव गर्भस्थस्य कलशाकारस्य पुरो दृश्यमानस्य विस्तृतसहस्र-पर्णस्य श्रीपर्णस्य गरुडगरुद्वर्णायां कर्णिकायामनिमिषाणामपि चक्षुषामविषयं किमपि सुषिरं निषीदत्ति तत्तनूं तनूकृत्य चाविश्य कतिपयानि पदन्यासानि विरच्य तत्र लक्ष्यमाण-मधोभुवननगरं प्रतिपद्य कलधौतपरागानुबिद्धपथेषु चतुष्पथेषु निर्धूतपथिककारिकासूपकारिकासु द्रष्टॄणां वर्धिष्णुतृष्णाजन-कत्व(?)कृष्णोष्मांशुगर्वसर्वङ्कषमणिखचितशिरोगृहेषु गृहेषु निर्गलत्कान्तिकुञ्जररञ्जितासु प्रासादसर्वंसहासु नवोपल — द्युतितिरोभूतदैवार्चिषु प्रणिपातप्रसन्नकालिकासान्निध्यभासुरेषु सुरालयेषु किंच अनुदितदेशेष्वपि नरवशीकृतयोरवशात् कण्ठी-रवयोरिव यातुधानाधमनीतयोर्दाशरथ्योर्गवेषणाय संप्रति यति-तव्यं भवतैतावत्पर्यन्तं तपस्तप्यता मया पूर्वमिदमयनं विदित-मितः परं न हि जानामि ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लो० –

हनूमंस्त्वं गत्वा निशिचरपतेर्मन्दिरवरं
रणे जित्वा शत्रुं त्रिपुरमिव शम्भुर्दृढिमगम् (?)
असूर्यंपश्येऽथो (धो) भुवननगरे ... ... (ऽनल्पतिमिरे)
बालार्कं संस्थाप्यावृ (व्र) ज च परि गृहीत्वा (?)
रघुसुतौ ॥ 9

तुभ्यं भद्राणि भूयात् (?) ऽवदितरकठिनान्यन्तराहित्यजुंषि
श्रीविष्णोर्जैत्रयात्रासमय इव चतुःपङ्क्तिलोकाधिपस्य ।
गच्छेतो नालरन्ध्रं प्रविश य (च) शकुनान्यग्रतस्ते क्षपायां
पश्य प्रादुर्भवन्ति प्रकृतिरिपुकुलध्वंसशंसीनि सद्यः ॥ 10

चू० –

एवमथाधरयवनिकान्तर्वर्तिनीं नटिकायमानां वाणीं बहिः प्रकटीकृत्य दिनेश्वरतनुजादीनाश्वासयिषुरचलपद्धतींमिव शोकवतीं प्रावृट्कालकमलिनीमिव निर्यातराजहंसां हरिप्रियामिव पद्मवासनिपुणां शचीमिव कौशिकावलोकितां चक्रवाकीमिव क्रोशन्तीं कापेयीं प्र (पृ) तनां प्रति ययौ ॥

श्लो० –

रेचितं निशिचरेण केवलं रक्षितुं गतवतेव वायुना ।
सेवितः स हनुमान् स्वमात्मजं निर्ववौ कुसुमसंगसुगन्धिना[1] ॥

---

[1] सुमरजः सुगन्धिना

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

आयामावहपीव्नि (व) हस्तवलनैरुद्घाटितक्ष्मारुह—
प्रत्यग्रप्रसवौघसान्द्रसविधः क्रींकारभिन्नाम्बरः ।
धैर्योन्नम्रशिरास्तटाकतटगः शौर्येण संसेवित-
स्तामस्यां व्यचरन्करीव भगव [वा] न् यामे
द्वितीये हरिः ॥ 12

तत्र तत्र चरन् वार्तिर्निर्मलं देशमानशे ।
तं कपिं महती चिन्ता पुमांसमिव भामिनी ॥ 13

पापान् शत्रुगणान्निहत्य रघुजौ सन्दर्शयिष्यामि ता-
वित्थं निश्चयमाश्रुतं बत मया प्रातः कपीनां पुरः ।
श्लक्ष्णं प्राप्तवता परं सरभसं नादर्शि पन्था तयो (मया)
किं कार्यं करवाणि भूतलमिदं निर्भिद्य यास्यामि किम् ॥

चू० —
इति विचिन्त्य दाशरथिदूतपुरःसरो हनुमान् आर्यमिश्रा-
निष्टदेवतादीन् राघवयोर्मङ्गलसम्पादननिमित्तमीप्सितकार्य-
निर्व (ह) णार्थं च पादप्रक्षालनाचमनीयान्याचरन् प्रयतः स्तोतु-
मुपाक्रमत ॥

श्लो० —
भद्राय रौद्राकृतये जगद्द्रुहां
रुद्राय विद्रावितशात्रवाय ते ।
कल्पद्रुमायार्थिजनस्य सन्ततं
सुधांशुभूषाय नमः सहस्रशः ॥ 15

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पितामहाय शान्ताय जगत्संसर्गहेतवे ।
मुकुन्दनाभीकमलयोनयेऽस्तु नमस्कृतिः ॥ 16

पूज्यैः पन्नगकिन्नरप्रभृतिभिर्देवैर्महाप्राभवै-
दिक्पालैः समरुद्गणैः प्रतिदिनं भक्तार्तिभङ्गोद्यतैः ।
जुष्टः स्वर्गमविष्टपेऽनुभवति श्रीमानयं वासवः
साम्राज्यं निरुपद्रवं मुहुरहं तस्मै नमामि स्फुटम् ॥

सन्त्यक्तराज्यसौख्याय धूतबन्धुगणाय च ।
सलक्ष्मणाय शूराय भूयाद्रामाय मङ्गलम् ॥ 18

इति भणन् स विभीषणदर्शितं
मुकुलितं कमलं समपद्यत ।
स्वमुखसाम्यमिदं वहतीर्ष्यया
तदिति जेतुमिवानिलनन्दनः ॥ 19

रामाङ्घ्रिभ्यां व्रजति समतामीर्ष्ययेवेदमब्जं
छित्वा दोष्णा हरिरिति मृदुं सेवितान्तं पलाशैः ।
स्तोकाकारः स कृशमविशन्नालरन्ध्रं सतन्तुं
निम्नं वेगात्सतृणमवटं भूमिचारीव हीरः ॥ 20

चू० –

तदनु तदानीमुदारमतिः सदारकं सदारचिततटाक-
रक्षणमम्भांसि निर्भिद्य मैनाकमिवोत्सरन्तं तमक्षियुगलमुन्मील्य

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

रोपविषयीकृतनेत्रं लब्धार्धाध्वानं आत्मानं कन्दुकमिवोत्क्षिपन्तं सरणिकृतवारणं तरुणमदवारणमिव ससारससारसवासं कामार-मवन्तं मामविगणय्य कोऽत्र गच्छतीति गर्जन्तं पर्जन्यमिव नीचया वाचा तर्जन्तं धूर्तमिव कमपि विसारराजमुपससार युद्धाचरणाय रणबद्धप्रियः क्रुध्यन् गन्धवहसूनुः ॥

श्लो० –

तयोर्नभस्वत्सुतमत्स्यनेत्रो-
रासीन्नियुद्धं जगदण्डभीमम् ।
सरस्तटे वेगहताखिलद्रु-
क्रुधेव जेत्रोर्बुधभौमयोः खे ॥ 21

हस्तेन हस्तं शिरसा शिरश्च
वक्त्रेण वक्त्रं चरणेन पादम् ।
निहत्य तुल्यं मृधमादधाते
द्वौ शौर्यवन्ताविव पिङ्गदृष्टी ॥ 22

मदात्सन्निर्याते प्लवगझषपत्योर्जगदिदं
समस्तं निध्यातुं मुदित इव शब्दे विचलति (?) ।
हरिन्नागा सत्ता नियममिति गर्जन्ति कुलशी(?)
स मत्त्वा तां (तान्) हन्तुं प्रहरणमुपादाय गतवान् ॥ 23

पातले पातयामास वातपुत्रो धराकृतिः ।
मारीचमिव रामेषुर्गर्जन्तं मत्स्यवल्लभम् ॥ 24

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

उत्तस्थौ सरसो मध्यात्सरसो मीननायकः ।
पारावारात्स बृहतो वडवाग्निरिवान्तरात्(?) ॥ 25

मुष्टिप्रहारमनुभूय वलीमुखेन्द्र-
स्तेनोत्थितं झषवरेण समागतेन ।
क्षित्यां पतन्नसहनः क्षणिकं दृढोऽपि
स्व[स]स्मार पूर्वकृतवासववज्रघातम् ॥ 26

क्षिप्रोत्क्षिप्तो वार्च[ति]ना मत्स्यराजः
शोणास्येन क्रोधहा[भा]जा करेण ।
तारस्थाने व्योम्नि बभ्राम पश्चात्
तेना श[ध]स्तात्पातितो मारुतिश्च ॥ 27

चू० – ततः परमेवंभूता नं[वे]तौ —

श्लो० –

परस्परं ग्राहितकेशपाशौ
परस्परं तीक्ष्णनखैः खनन्तौ ।
परस्परं दन्तमुखैर्दशन्तौ
परस्परं भावितभूमिदेशौ ॥ 28

क्षुभितेन्द्रियो बहुद[त]रश्रमत-
स्तनुतः स्रवद्भिरमितैः स्नपितः ।
रुधिरैः समं कृतरणं प्रति तं
स गिरा ननन्द पवमानसुतः ॥ 29

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कस्त्वं ब्रूहि प्रबलमकुटव्यूहकोटीरत्न
किं त्वं [त्वन्नाम] नाम प्रवद भयमुक् साधु योद्धासि सङ्ख्ये ।
अस्मत्साम्यादवधि [जि] गमिषुस्त्वत्कुलं सम्यगासं
वातावेवं वदति झषपो योद्धुमभ्यर्न [र्ण] माप ।। 30

क्रूरेऽरुन्तुदभाषणैकनिलये सङ्ग्रामकालेऽधुना
मां त्वं कूकुदवत्प्रयत्नसहितः किं पृष्ठवान्सन्ततिम् ।
तां वार्तामपसृत्य चेहि समरं क्षिप्रं मया रे कपे,
मत्स्येशं निशि निर्बबन्ध हनुमानेवं वदन्तं त्विरम् ।।

चू० –

स किल जलचरवल्लभः निजभवमस्मै विविशयिषुः (विवेदयिषुः) वचनमिदकुमरेयामास (वचनमिदं कुहरयामास)

श्लो० –

जानक्यन्वेषणे येन धृतं रामं (माङ्गु) गुलीयकम् ।
बिभेदि (ति) रावणो यस्मात्स पिता हनुमान्मम ।। 32

ब्रुवन्तमथ मत्स्येशमेवं पप्रच्छ मारुतिः ।
वर्णिनो वायुजस्याभूदङ्गनासङ्गमः कथम् ।। 33

चू० – मत्स्यराडपि वाणीमेनामभाणीत् ।।

श्लो० –

पुरा समुद्रं हनुमान् लंक (लङ्घ) यामास यस्तदा ।
तमध्वश्रमजातानि स्वेदतोयान्यभूषयन् ।। 34

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

ततः स शङ्कायमानमासस्य (मानसस्य) मीननाथस्याभिप्रायमवेत्य विश्वरूपदर्शनेन तस्य विश्वासभाजनमयासीत् ॥

श्लो० –

विहितं तु मया क्षमध्वमागो
विगतज्ञानलवेन तातपादाः ।
निगदन्तमिति प्रणामवन्तं
हनुमानङ्कतलं तुतोष नीत्वा ॥ 45

विसारसारनेता स धराधरगतो नतः ॥
रराज राजमौलिर्वा [?] ... ... ...
[रराज राजन्मौलिर्द्राक्]
तदङ्काङ्कितविग्रहः ॥ 46

विस्मृतं हनुमता पराजयं [?]
पुत्रवत्सलतयापि राघवः [राघव] ।
दुर्जयद्रविण[1]सेवितेन य-
च्छास्त्रसम्मतमिदं हि विष्टपे ॥ 47

चू० –

तदनु कुलीनः शकुलीनः संहृतरूपं रसातलप्रवेशतत्पर कपिवरमंसे कौतुकान्निवेश्य पातालान्तरं विनीय प्रसर्पत्प्रभापटलप्रद्रुतध्वान्तं अष्टापदकोटिकं निजसखपुरगोपुरं करेणास्मै दर्शयन् एवं वचनकुसुममालां ग्रथयामास –

---

1. वल (पुत्रात्पराजयोऽपि पितुः सम्मत एव)

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लो० –

स्वर्णस्तम्भविराजितालयकुला कल्याणहर्म्याकुला
प्राकारैर्धरणिं विदार्य शतधा स्पृष्टूं(स्प्रष्टुं)पुरी पुष्करम् ।
उद्युक्तैरिव सप्तभिः परिवृता मैरावणस्याधिकं
कान्ता राजति तात पश्यतु भवान्पातालोकोदरे ॥ 48

अयोमयो नीरधरप्रकाशो
नीलः परीतोऽयमिव द्विपानाम् ।
सालस्तमोभिर्निचयैर्महीयः(?) (महीयान्)
सन्दृश्यते तत्र विलोकयादिः (द्यः) ॥ 49

इदं वप्रमयं वप्रं द्योतते लीढभूमिकम् ।
निकुरम्वमिव स्वच्छं वृषभानां सितौजसाम् ॥ 50

निर्वारिवारिदापाण्डु कांस्यवप्रं प्रकाशते ।
वज्रिवज्रद्रुतो गूढो हिमवान् शैलराडिव ॥ 51

आरकूटं हिरण्याभं ताम्रं बन्धूकसन्निभम् ।
रोप्यं कैलाससदृशं क्रमेण परितःस्थितम् ॥ 52

ततः परं कृत्रिमसिह्मवजि-
हंसादियुक्तं पललाशिपुर्याः ।
महत्तमं सप्तममुच्छ्रिताग्रं
सौवर्णवप्रं हरती ... ... ॥ (व चित्तम्) ॥ 53

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

अत्र संमुखीनतोरणान्तः कोऽपि विशेषोऽस्ति सोऽवधीयताम् ॥

श्लो० –

हैमो घटो द्वारि विशङ्कटोऽस्ति
वरेण धातुः स निकृत्ततन्तुः ।
पतन्सपत्नागमनं धरायां
दौवारिकाणां वदति प्रकामम् ॥ 54

तेनात्र सावधानेनागन्तव्यमरिमर्दन ।
त्रिलोक्यां भवताऽबुद्धं किमस्ति प्रतिभान्वित ॥ 55

स्वामिद्रोहभयेनाहं साहाय्यं शङ्कितस्तव ।
विधातुमासं त्वं दुष्टं शत्रुं जय जगद्द्रुहम् ॥ 56

एवं निवेदयन् रन्ध्रं गत्वाऽयं योजनद्वयम् ।
मत्स्यराजोऽवरोप्यास(शु)स्वांसात्स्वनिलयं ययौ ॥ 57

बहिराशरपस्य पत्तनात्
सरसीमेत्य रसी समीरजः ।
पुनरम्बुधिमाससाद किं(चिन्ता-)
त[न्त]मितीव भ्रमतः स्थितस्तटे ॥ 58

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० – स्वयमिति बभाण ॥ [तदनु स स्वयमिति बभाण ।]

श्लो० –

सूर्यान्ववायककुदोघंनपापहन्त्रीं
वार्तामयीं मधुधुनीं मधुरां पवित्राम् ।
यः कोऽपि वर्षति मम श्रवसोरिदानीं
साम्राज्यमेति नियतं मदनुग्रहात्सः ॥ 59

लब्धतटाकतटस्थ पिशङ्गं
दक्षिणचक्षुरमुष्य[त]चलत्वम् ।
राक्षसनायकनाशनशंसि
प्राप रघूत्तमभक्तवरस्य ॥ 60

हर्म्यैरुच्चैरजतविकारैर्व्याप्तां
दृष्ट्वा वार्तिर्निशि नगरीं तां दुर्गाम् ।
उद्यत्कण्ठो दिवि मूदेवा[मुमुदे वा]केकी
वर्ह[बर्हे]र्व्यूहैर्जलधरमालामेनाम् ॥ 61

इति श्रीरघुनन्दनपदारविन्दवन्दनकन्दलित-
साहित्यसनाथेन रघुनाथेन विरचिते
मारुतिविजयचम्पूकाव्ये
मैरावणपुरदर्शनं नाम
चतुर्थः स्तबकः ॥

---

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

॥ पञ्चमःस्तबकः ॥

——x——

मैरावणोऽथ शयनं निजतल्पजुष्ट-

मारुह्य सूननिकरैरवकीर्यमाणम् ।

दिव्याङ्गरागकलिताशरसुन्दरीणा-

माश्लेषणेन स विवृद्धसुखो निदद्रौ ॥ 1

युवतिकरसरोजक्रान्तदण्डोज्वलाभ्यां

कुशकुसुमसमाभ्यां देवलोकाहृताभ्याम् ।

मृदुलतनुरुहाभ्यां चामराभ्यां पलाशः

पवनशिशुवमङ्घ्र्यां वीजितो राजति स्म ॥ [?] 2

कान्तः स्त्रीभि. सेव्यमानः स मत्तो

वींणागानन्यस्तचेतोयुताभिः ।

घर्मापाये वारिदो वारिपूर्णो

विद्युद्धीरुत्पेटिकाभिर्बभूव ॥ 3

तस्य रत्नमकुटं विचित्रितं

किङ्किणीभिरमिताभिरञ्चितम् ।

स्वर्णशैलपतितं महाप्रभुं [प्रभं]

सर्पशालिशिखरं बभाविव ॥ 4

शैलोपरिष्ठादसितः किरीटो

न दृष्टपूर्वः श्रुतपूर्वको न ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्वकीयजायाकुचपर्वतस्थः
संदृश्यते स्माशरनाथबन्धुना ।। (?) 5

निजभर्तृमुखाक्रान्तं मातङ्ग्या वृत्तमाननम् ।
पिहितं वारिदेनेव चन्द्रबिम्बं व्यराजत ।। 6

निश्वासवातं जिघ्रन्ति कामिनीः(न्यस्)तस्य रक्षसः ।
सँल्लापं धुरि कुर्वन्ति कर्णभूषारवच्छलात् ।। 7

रत्या सुरापानमदान्महत्या
क्लिन्नानि नारीवदनानि तानि
दिनावसाने मह[चल]दूर्मिसिक्तैः
सहस्रपत्रैरुपमानमापुः ।। 8

दीपैर्दीपितदिक्चतुष्टयमिदं लीलागृहं राजितै-
रुद्रं[रुद्धं]रत्नमयैः सविद्रुमसरं गारुत्मतस्तम्भयुक् ।
भूषाभिः कमनीयविग्रहभरै रोचिष्णुभिर्यौवतैः
रक्षःकायविनिःसृतामितरुचा त्रित्रप्रभं प्रोज्ज्वलत् ।।

चू० –

सन्यस्तसमस्तभृङ्गारपटलसङ्गारचितमधुपानयुवतिवदन-
त्रलमानमधुपाननादितदिग्वलयं रतिपरिरम्भसंरम्भातिशय–
पंकुल्यमानधम्मिल्लविप्रकीर्णमल्लीमतल्लिकापुनरुक्तपुष्पतल्पं –
मरकतलगुडनिर्मितवातायनागतवातकम्पितया पथिकजनानह–

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ङ्कारकरझंकाररवभाव्व्यञ्जितभेदचञ्चरीकपुञ्जया बहुतर-नीलिमालकमालिकया शोभमानाभिर्वनिताभिः सङ्कुलपर्यङ्क-विचित्रचित्राङ्कितवस्त्रोल्लसदुल्लोचनावसानलम्बमानैर्मुक्तासरै-रुद्भासमानं वल्लकीभूषितसल्लकीकुसुममल्लिकामोदच्छुरित-चन्दनादिगन्धं शुद्धान्तमस्य धनाधिपावरोधनं परिजहास ।

श्लो० –

निद्रामन्वभवत्तस्यां शय्यायां राक्षसेश्वरः ।
गिरिदर्यां विशालायां शमितो मृगराडिव ॥ 10

चू० –

अथामराधिनाथसखदशरथात्मजापहरणापतितापदा-बोधित इव शयनात्सपक्षक्षितिधर इवोत्थाय विहितमनःसन्ता-पया चिन्तया ताडितो भगिनोभवनं प्रति जिगे(ग)मिषया प्रतिष्ठमानो निद्रापिशाचिकावेशपरम (व) शापिः (भिः) शिञ्जन्नूपुररवाभिनादिताशाभिः समुद्दिताशाभिर्वशाभिरिव-करेणुः कनकरेणुरञ्जितसरण्यां सुवर्णरेखाङ्कितदुकूलाभिः भर्तृमोहनासिकासूत्रसमाकृष्टाभिः त्रिवृद्धघोषाभिर्योषाभिरनु-गम्यमानो मणिमयमकुटविनिःसृतहायनभिल्लमल्लाभिद्रुत-ध्वान्तव्रातायुरन्तयातायुः वक्षःस्थललक्ष्यमाणक्षौमक्षुण्णहिरण्य-मयोपानदञ्चितचरणः कौणपपतिः निमित्तवशादन्दुकमुंदि(डि)त-पदां निवसितबन्दीमनसित(शित)कृशां दुर्दण्डीनामधेयां स्व-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विधेयों स्वसारङ्कलितसारां साध्वीयसीं सत्संप्रदायानुगुण-मनोवृत्तिमविकल्यं दाशरथी(थि)बलिदापनार्थमिदानीं कालि-कार्चनाकरणाय सरोवरेण्याद्धाटकघटे कुपीटाहरणार्थं याहि क्षिप्रमित्याख्याय विख्यातशक्ताभिकुलवर्धनकृतार ? भ्रातः शृङ्खलमिदं प्रच्याव्यते चेत् गमनाय सुलभमित्यभिधायिनीं दण्डेन तां प्रहृत्य समेत्य शुद्धान्तमध्यमध्यास्त ॥

श्लो० –

> दुर्दण्डो रजनीचरस्य भगिनी निष्पारशोकान्विता
> चेलं कच्चरदूषितं शिथिलितं कटचां वसाना ततः ।
> सन्मार्गाच्युतमानसा निवहती(?)स्वर्णं घटं पाणिना
> पानीयानयनाय सा गतवती स्वच्छं तटाकं प्रति ॥

पयोधरविनम्रापि पयोधरणचेतना ।
दुःखार्दिता निशिचरी बभूव भयतो विभोः ॥ 12

चू० –

सा खलु खलजनोचितशृङ्खलस्खलच्चरणयुग्मा शिव-वदान्येन विधिना प्रेरितेव कुसकेतनपटपटात्कारखव्याजेन दिव्यशकुनायमानाऽनुकूलपवमानेन राघवोदन्तनिगदनार्थं – मत्सुतसविधमेह्येह्यरमित्यादरादीरितेव द्वारपालपरिहसितनीच-व्यापारा शोकपारावारपारस्पर्शिनी धर्मिष्ठजनानुरागा शक्तच-भावेन कृच्छ्रं घटं कटावुद्वहन्ती उद्वमन्ती घ्राणकुटान्निःश्वासं

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

विश्वासं राघवयोरुन्मीलयन्ती कान्त्यादिपरिकरवृतनिजास्पद-मार्गा(?) साम्राज्यसुखमनुभवन्ती तारुण्यसम्पदं प्रसह्य विद्राव्येव पलितकलितपाळ्या व्यपगतकान्त्या जरया समाक्रान्तक्षेत्रा मातामहीय(?)वरगर्वायमाणरावण प्र [पृ] तना—प्रदरस्पृहोद्ग्रीवे सुग्रीवे विक्रमप्लवनप्रतीते प्लवङ्गमवले सन्ततं रघुनाथसविधमुपजग्मुषी [?] लङ्कापुरबलाबलाद्युपह्वरकथन-तोषणे विभीषणे हरिन्मुखसमुद्यद्यशसि सर्वनामस गर्वेंधनचर्वण-शिखावति हनूमति च सति वृषवर्त्मनि निषेदुषोर्भ्रात्रो राजपुत्रयो रावणनिधनवेलायां कथमेतादृशं देवाद्यतिदुःसहं श्रवणमात्ररोम-हर्षणकरं दौरास्थ्यमायातमिति निजप्रमुषितव्यसनमपि विस्मृत्योच्चैः स्वरेण वाचाटिताशा कोशश्रेष्ठाधिष्ठितं तटाकतटमेव शनैः शनैरुपाससाद ॥

ततः परम् —

तामागतां कटिनिविष्टघटोपरिस्थ-
हस्तामुदीक्ष्य कथितार्यकथां स वेत्तुम् ।
शक्तोऽहमेवमनया रघुनाथसत्य-
वार्तामसंस्त कपिनायकमन्त्रिवर्यः ॥ 13

आसाद्य तां निशिचरीं हनुमान् महात्मा
कस्यासि सुभ्रु गृहिणी तनयाऽऽशु शंस ।
किं नाम ते वदति चेद्भवतीति कस्मात्
संविव्यथे [?] व्यपगतं व्यसनं करोमि ॥ 14

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

अथास्य वाक्सुधाझरीं श्रवणाभ्यां निपीय दोहृद-सेकेनाकालिकं कोरककुलमुद्गिरन्ती तरुविशेषपङ्क्तीव पुलक-मुन्मीलयन्ती आखुप्रत्यवसानासक्तिर्बिडालीव विष्टम्भितावयवा वलाहकनिनादाकर्णनहर्ष(जातहर्षा)चातकीव मुखमुन्नमय्य दिक्षु-वीक्षमाणा राक्षसी नेदिष्ठं कपिवरिष्ठं "निशि ह्रस्वतनुः ... " को भवानि"ति तमन्वयुङ्क्त ॥

सोऽब्रवीदसम्भ्रान्तस्ताम् –

श्लो० –

यस्य विक्रमसम्पत्या महत्या बाहुजन्यया ।
दर्पाक्रान्तसपत्नेषु शल्यमारोपितं करम् ॥ 15

धिक् सागरस्य गाम्भीर्यं धिग्धनं धनदस्य च ।
यं वीक्ष्य निन्दयामास (?) सर्वानिति पितामहः ॥ 16

यस्य टङ्कायमानस्य धनुषो ज्यास्वनं महत् (?) ।
समाकर्ण्याभ्रगैर्दैवैरभ्रध्वानोऽपि धिक्कृत. ॥ 17

यस्याज्ञाचेटिकां पूज्यां राज्ञां शीर्षावतंसिनीम् ।
अनवाप्य कपिश्रेष्ठो मदाद्भ्रान्तेन्द्रियः क्षणम् ॥ 18

आग्नेयास्त्रप्रभावेण सिन्धुराजश्चकार सः ।
धूमिताशेषसत्वानां चिकित्सां यस्य दर्शनम् 19

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यः समासाद्य तां लङ्कां सरितांपतिवेष्टिताम् ।
कुम्भकर्णस्य पन्थानं नयिष्यति(?)तदीश्वरम् ।। 20

यत्पराक्रमसञ्जाता जिष्णुवाहनबान्धवा ।
कीर्तिरुल्लङ्घयामास क्रीडन्ती दशदिक्तटम् ।। 21

दूतोऽहं तस्य रामस्य नरेशस्य समागतः ।
हनुमानिति मामाहुः सुग्रीवस्य च मन्त्रिणम् ।। 22

चू० –

सचातुर्यचमत्कारधोरणीं स वाणीं भणीय(संभण्य) तस्थिवानत्यादरादेव, तथा तदिदमभिदधे ।।

श्लो० –

ब्रह्मदण्ड इति ख्यातः पुरासीद्वायुनन्दन ।
यस्य दोर्वीर्यव्रातेन कम्पितं निखिलं जगत् ।। 23

पुत्रीं पुत्रं स धर्मात्मा जनयामास राक्षसः ।
पूर्वाऽहं राघवाहर्ता द्वितीयः कौणवासि(पाधि)पः ।। 24

मत्पिता कालदण्डाय ज्वलन्तीं भूषणादिभिः ।
नवयौवनसंपन्नां मामदाद्विधिपूर्वकम् ।। 25

पत्याऽवाप्तादि(धि)सौख्याहं नीलमेघाभिधानकम् ।
सुखादत[ज]नयं पुत्रं वह्नि भानुशिलेव तम् ।। 26

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ऐरावणोऽथ मद्भ्राता सर्वदुष्कर्मणो निधिः ।
निर्मर्यादतरप्रस्थं हेमाद्रिं तम[प]से ययौ ॥ 27

रजनिचरसुतः सुरालयाद्रौ
सुशि[चि]रमसौ कठिनं तपश्चकार ।
सुरगणविनुतो विधिः प्रसन्नो
गमनमनन्तबरस्य दापनाय ॥ 28

चू० –

तदनन्तरमनन्तरमणीयवर्चसं गोगोचरीभूतमतिपेशलाति-कोमललोमावलीमसृणितांसे हंसे निषेधि[दि]वांसं सुमेरुकूट-प्रकारकिरीटरोचमानैकोनपञ्चवक्त्रं [1]पङ्क्तिमन्तं भास्करकर-तस्कराङ्गदग्रथितमूलोपरिदेशैः लपनसंख्यापरिमाणैर्जानुपर्यन्ता-यतैरनन्तभोगाभोगैर्दोर्दण्डैर्मण्डितं गन्धर्वपरिभुज्यमानैर्देवता-भोगमनुभवतामस्मयानामस्माकं जातुचिदपि भुवि जननं माभू-दिति . सयुक्तचुन्मेयं प्रार्थयितुं कृतावतरणैस्तारकनिकायैरिव कल्पकानोकहेभ्यः पत्रावशेषितमुपाहृतैः स्रवन्मधुस्रवन्तिकापान-दृप्यन्नानद्यमानद्विरेफैः प्रथमसश्चयैर्मेदुरीकृतपार्श्वयुग्मं गीर्वाण-गणवर्ण्यमानबिरुदप्रबन्धविडम्बितसिद्धसाध्यपरिशीलितवाद्या-डम्बरवाचालितदिग्वलयोन्नमत्स्तनयित्नुस्तनितशङ्काप्राप्यय-माणबर्हिगणवीक्ष्यमाणमखिलभुवनानिष्टतापचूपणपटुकरुणा –

1. यशस्विनम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुधावृष्टिजन्मपदनयनघनाघनं वामाङ्गानुषङ्गसङ्गिना सन्ध्या-रागबन्धुरेण कुङ्कुमपङ्केन संरक्तवक्षसं कनककटिसूत्रावलम्बिना हृदयकमलनालसन्देहावहेन स्फटिकसमप्रभेण मौक्तिकदाम्ना विद्योतमानं विद्युत्प्रकाशसङ्काशकौशेयपरिक्षिप्तं नवमणि-प्राचुर्यविभ्राजिताङ्गं शताङ्गमलङ्कुर्वाणमकस्मादुदितोऽभूतो-पमः किमयं कोलाहलरव इति त्वरमाणैर्वनसत्वैरभीक्ष्णं दृष्टिभि-रभिश्लिष्टं दिनमणिमयूखस्फुलिङ्गित[1]हेल्युपलगर्भजुड्भिस्तपो-धनाग्र्यैः पुनः पुनः प्रार्थ्यमानं पदुद्वहनप्रसितेन किन्नरवरेण पुरस्कृतं तं बृहदाकृतिं कृततीव्रतपसे मैरावण! प्रसेदिवान-स्म्यहं त्वदभीष्टं वरं वरय मृषेतरं ददामीति गिरमुदितवन्तं विधृतविविधचराचरप्रपञ्चनिर्माणकर्माणं स्वच्छन्दवदननिष्पन्द-मान[2]ब्रह्माणं ब्रह्माणमेतद्वचनामृतवर्षसेकेनेवानन्दबाष्पेण परि-क्लिन्नस्तदीयनिर्वर्णनतृडुद्घाटिताक्षो रक्षःपतिराचचक्ष[?]

" विधातो [तर्मम] मम देवैश्च बुधारिभिरवध्यताम् ।
सुधामालमलभ्यं तैर्गुंधान्यकमुभौ दिश ॥ " इति 29

तथैव निकषात्मजाधिपकठोरतापं तपो
वरोऽस्तु तव पुण्यतो नियतमन्यलभ्यो ह्ययम्[?] ।
प्रभूतविभवाकुलं जननिषेव्यमाणान्तरं
सृजामि तव मन्दिरं त्वदरिदानवैर्दुर्लभम् ॥ 30

1. सूर्यकान्तोपल 2. वेद

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

इत्युदीर्य जगतामधीश्वरो
नागलोककुहरे महापुरीम् ।
सृष्टवानमितयातुसेविता-
मत्र काञ्चिदमरावतीमिव ॥ 31

लङ्कायाः कमनीयतां पलभुजां विस्तारतां वारिधे-
र्देवेन्द्रस्य पुरीरुचित्वमलकासौन्दर्यमन्यादृशम् ।
ब्रह्मा हृष्टमनास्तदीयतपसां माहात्म्यतः केवलं
ध्यायं ध्यायमयं ससृष्ट(ससर्ज)नगरीं मैरावणस्य
क्षणात् ॥ 32

विधाय सत्यमेवं स विधाता समुपेयिवान् ।
राक्षसं दुर्मतिप्रायं काङ्क्षितावाप्तिसंमदः ॥ [?]

चू० –

तदनन्तरमन्तरायाचरणतत्पराणि पुरा पराजितानि चक्षुरादीन्द्रियचेष्टितानि पुनराददानः द्विमातृको वन्यः सस्य-सञ्चय इव तनुपुष्टिमवाप्नुवन् पातालवासिभिर्जातामोदभरै-श्छत्रचामरादिचिह्नैः राजभृत्यवर्गैरुपायनीकृतानि नवरत्नादीनि करेण संस्पृशन् तैरुपानीतं भासा भास्करं तिरस्कुर्वन्तं दिव्य-मणिलक्षिताङ्गं शताङ्गमारुह्यानुचरतोष्टूय्यमानविचित्रचरित्रो ब्रह्मदण्डात्मजो ब्रह्मनिर्मितं नगरमधिगत्य शोभाविशेषविजित-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

रत्या सज्जनमत्या मातङ्गचाह्वयया कयाचिन्निशाचर्या व्यपोहितादिमाश्रमः कृतराज्याभिषेको नीलकेश्याः[1] (?) पुत्र्या लाभेन प्रमनाश्चिरमध्यवात्सीत् ॥

श्लो० –

कदाचिदारादशरीरवाणी
नभोऽजिरे योदभवत्प्रकाशम् ।
सासीद्विभोर्मानसतापहेतु-
र्मराळराजस्य घनेव वृष्टिः ॥ 33

राजंस्तव प्रियसुतां परिणीय पुर्या-
मस्यामिमामनुभविष्यति भागिनेयः ।
पट्टाभिषेकजनुषं भवतः प्रमोदं
निर्यातुमिच्छति बलादिति राज्यलक्ष्मीः ॥ 34

तद्व्याहृतश्रवणतः क्षणदाटनेतुः
पापस्य चित्तकमलं कठिनत्वभृङ्गम् ।
रोषाग्निनापि वलितं कनता हनूमन्
म्लानत्वमाप न हि किंचन चित्रमेतत् ॥ 35

---

1. नीलकेशीति कस्यापि राक्षसस्य नाम । नीलकेशिनः इति स्थाने नीलकेश्या इति प्रयोगः अशुद्धः ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पश्चाद्बालं मत्सुतं नीलमेघं
क्रोधाद्बाक्तं वक्त्रमाबिभ्रदेषः ।
चक्रे खड्गं कोशहीनं जिघांसु-
र्भर्तुर्मेऽभून्मानसाब्जं सकोशम् ॥ 36

स्वनामपूर्वार्धमिव स्थितं तं
समर्थयन् चाटुतरैर्वचोभिः ।
सुतं विलोक्याधिकवेपमानं
स कालदण्डो धृतिमानरौत्सीत् ॥ 37

निधाय (चिराय) शान्तेषु विरोधवल्लीं
मन्त्रायपुत्रादिषु सन्मनःसु ।
क्रौर्याभ्यसूयाम्बुभिराशरेन्द्रः
संवर्धयामास दिने दिनेऽयम् ॥ 38

क्रूरेण तेन निगळैरभिनह्यते स्म (?)
शोकेन साकमहमात्मजनायकौ च ।
साधू सुखार्हवपुषौ वत वासमीयुः
पूर्वाणि तानि चरणेषु परो मनोऽब्जे ॥ 39

---

क्रूरेण अहमात्मजनायकौ च अभिनह्यते स्मेति प्रयोगश्चिन्त्यः ।

क्रूरो बबन्ध निगळैः पलभोजनेन्द्रः शोकेन मामपि सहात्मजनायकौ च ।
साधून्सुखार्हवपुषो वत ... ... ॥ पूर्वाणि निगळानि परः शोकश्च क्रमेण (साधून्) चरणेषु मनसि च वासमीयुः इति कवेराशयः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

बन्दीदे (गे)हे तमःस्थाने वेशिता वयमीदृशाः ।
आसासिम (आसिष्महि आस्महेऽत्रेति वा) चिरं कालं
स्वाहारेण विवर्जिताः ॥ 40

पतिस्तपस्वी मम कालदण्डः
स्वनामधेयार्धवशङ्कतोऽभूत् ।
विन्यस्य शोकं मयि स प्रयातो
मद्वेदना किं(?) द्विगुणीकृता यत् ॥ 41

एवं स्थिते जडमतिः खलरावणस्य
वाचं हरन् भवति यात्वधमो हनूमन् ।
सङ्गृह्य साम्प्रतमिमौ रघुवीरपुत्रौ
दित्सुर्बली नियतमेव स कालिकायै ।

तच्छङ्कर्याः सपर्यार्थं सलिलानयनाय हि ।
तेनाहं प्रेषिता सत्यमत्रागच्छं मरुत्सुत ॥ 43

मया रुदन्त्यागतया यदृच्छया
नृराजसन्दानितचित्तयुक्तया ।
आलिङ्गितस्त्वं यदमन्दवीक्षणै-
स्तत्काकाल्य(तत्का)ताळीयमहो विधेः कृतम् ॥ 44

यततां यततां रघुप्रवर्हा-
वहितान् द्रष्टुमरं विमर्दितुं च ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तनुतां तनुतां मुदं मनीषां
घटयानिष्टपुरप्रवेशनाय ॥ 45

चू० –
स एतादृशैर्विशेषैर्भाषितपीयूषैर्वर्षितः पृषदश्वतनुरभूत् ॥

श्लो० –
आमोदभारः प्रसवेषु जायते
प्रशस्तमेतन्नवमल्लिकादिषु ।
तज्जल्पितं शुश्रुवतो(?)महो(हौ)जस-
श्चित्तं स जज्ञे हृदये हनूमतः । 46

मनोविनोदाय कृतात्मनोऽस्य
तस्या निजाङ्गैः प्रसृतेन येन(?) ।
औन्नत्यमद्रेर्गुरु पर्यभावि
तस्मिन् शरीरेऽपि ममुर्न हर्षा. ॥ 47

चू० –
अथ स वीर्यवानगर्वीरवर्वीकृतविश्वरूप उर्वीपतिसुत-पथ्यङ्कुरस्तां प्रतिवाचमवाक्षीत् (?) (अवोचत्)

"भोः सुशीले, निर्मलहृदये, दुर्विधेन धनराशिमिव त्वां पश्यता तुष्यता क्षुल्लकाकृतिना मया महीयसा, पयसा च कलशमिमं मुषितान्तरालं विरचय्य शिरस्याकलय्य यदि

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यास्यसि दौवारिकैः समं सप्त वप्राणि निर्भिद्य निहत्य युधि यातुधानानद्वितीयतृतीयघटिकायाः पेटिकां रघुवर्यवसितां सङ्गृह्य त्वत्सुतमभिराष्ट्रमभिषिच्य च निकषात्मजाऽऽमिषादनदृप्यमाणकङ्कां लङ्कामटित्वा भानवादीनां राघवागमनविचिकित्सामुत्सारयिष्यामि" इति ॥

श्लो० –

> अङ्गुष्ठमेयतनुरेष रघूद्वहाथ
> स्वर्णं विवेश कलशं जलपूर्यमाणम् ।
> सन्तोषसिन्धुममितं गुरुदुःखकूपं
> देवाः कपिं दितिसुताः क्रममीक्षमाणाः ॥ 48

चू० –

ततः क्षणशः प्लवगेनेव प्लवगेन वसितं शिरःस्थले निवेश्य निवर्तयन्ती(?)पतनशङ्कात्वरमाणविपुलकरपल्लवाञ्चललम्बितगलभागहाटकघटाधिष्ठितमस्तकतया पूर्वपर्वतवर्तिनं राहुग्रस्तपार्श्वं मार्ताण्डमण्डलमनुकुर्वती परदर्शनभयनिःशब्दीकृतपदविक्षेपतया दस्युरिति भ्रान्तिं जनयित्री रात्रिचरी भ्रातुराज्ञामिव मौनमुद्रां निदधाना निगळशब्दमन्येन पाणिना निरुन्धाना करालारुणगराळदंष्ट्रास्यविवरै रामद्वेषणचूषणपिशुनानि(?)धूमकेतूनिव चक्षूंषि बिभ्रद्भिः दक्षिणभागलम्बमानद्राधिष्ठभस्त्रिकाछुरितछुरिकतया विस्तृतशिरस्त्राश्रित-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शिरस्तया च विशालफणभुजङ्गभूषितैरिव धनुर्विद्यासु शिक्षितैर्दौरात्म्यपद्यासु क्षरितैररश्छदछन्नवक्षोभी रक्षोभी रक्षितां घटयुनां प्रतिहारभुवमवजगाहे ॥

श्लो० –

मध्येद्वारं ग्लपितचरणं मन्दमन्दं व्रजन्त्यां
वध्वां शत्रोर्गमनपिशुना कर्षतोवाङ्घ्रिमस्याः ।
धातुर्वाक्यादनुमहि तुला लूनतन्तुः पतन्ती
टेत्कारेण क्रुधितहृदयान् द्वारपालानधात्सीत् ॥ 49

तदात्वे त्वं रंडे किमु रिपुरिदानीमसि जडे,
वयं हन्मस्तस्माद्भ्रुकुटिनयनैर्भीमवदनैः ।
गदद्भिर्दुर्भाषामिति धृतगदैर्बाधिततनु-
स्तुलायाः साध्वी तैः पतनमनुसृत्य स्थितवती ॥ 50

तत्रान्तरे वानरपुङ्गवोऽयं
घटात्समुत्प्लुत्य धरामपादीत् ।
जनैरदृश्यः कटुपापमुक्तो
दिवं शरीरादिव पुण्यजीवः ॥ 51

यो वरणान्तरवीथिनिविष्टो
विग्रहलाभपिनद्धमनस्कः ।
पीवरविग्रहमापयदद्धा
तत्क्षममस्य रघूत्तम राजन् ॥ 52

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कीनाशदण्डसदृशं परिघं तोरणाश्रितम् ।
उद्धृत्य स महाबाहुस्तोलयामास वेगतः ॥ 53

दैर्घ्यवानपि तेनासौ तप्तायःपिण्डलोहितः ।
अलातचक्रानुकृतिं लम्बां चक्रे प्रतोलितः ॥ 54

कृतान्तधिषणानेतान् कृतान्तस्थानगामिनः ।
विधित्सुर्हनुमान् व्याळानक्षणीदिव पक्षिराट् ॥ 55

प्रतिहारिगणैः समं सशुष्मः[1]
परिघस्यापतनेन[2] सप्तवप्रान् ।
पवमानभवः प्रभाननैषीत्[3]
पितृपर्यायपदापराभिधेयम् ॥ 56

धाता मारुतजातबाहुलगुडद्योतत्प्रतापं ततं
भास्वद्भासुरशक्रवज्रबडवावैश्वानरीयैः खरैः ।
अस्राक्षीन्नियतं निसर्गलसितैः सारैर्यतो राक्षसान्
सालान् सप्त च मारुतिः शकलतां निन्ये मुहूर्तार्धतः ॥

ततः परं परनिराकरणमोदयमानसुहृदावलिर्दयालुराक्षारि[4]तराक्षसकृतदौर्जन्यचण्डया नरकसङ्घादिव निगळबन्धान्मामुन्मुच्य प्रथमं प्रमथगणाधिष्ठितं कालिकायतनं यातव्यमित्यभिहितः पवनभूस्तथा क्रियमाणः(?) (कुर्वाणो) नगरीरमण्या महाभरणं तदेवोपासाद्य द्रागद्राक्षीत् ॥

1. सवीर्यः 2. निपातनेनेत्यर्थे । 3. अग्निसाच्चकार 4. criminal

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लो० –

कवाटं पाटयामास देवतालयगोपनम् ।
हनुमान् दन्तिनः कुम्भं निष्ठुरो मृगराडिव ॥ 58

चू० –

तदन्तरमश्वन् पश्चमुखभक्तो रिक्तो रौद्ररूपेण कोपेन च समीरदायदो वैदूर्यस्तम्भनिकुरुम्बप्रतिबिम्बितात्ममूर्तित्वात् [1]सालावृकशतसंवृतमिव रौप्यवितानप्रत्युप्तरत्ननिर्यद्घृणित्वात् फेनिलैर्देवीमुखचन्द्रचन्द्रिकालाभच्योतच्चन्द्रकान्त[2]पुष्करैर्विततय-मानमिव भास्वरकार्तस्वरसालभञ्जिकापुञ्जहस्ततलनिवेशित-प्रदीपकूटावलोकितहरितं सर्वकालवर्धमानाऽगरुधूपसुरभितं सपर्याभव्यसामग्रीनिर्विवरीकृतस्थलं गर्भस्थलमभ्येत्य शङ्कर-भागधेयं पुरोऽवलोक्यमानां कात्यायनीमेनामाननसुषिरस्वैर-निःसरतां गीर्वाण-वाणीमयस्तोत्रवेणीनां सङ्गमधरणीमका-र्षीत् ॥

श्लो० –

गारुत्मतभ्राजितकान्तरूपा
श्यामेव तन्वी शिवधर्मपत्नी ।
एतादृशैराभरणैरमूल्यैः
परिष्कृतार्थात्र चकास्ति काली ॥ 59

---

1. शृगाल 2. जलैः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ।। अयं पद्मबन्धश्लोकः ।।

नालीकप्राप्तरक्षा वनजजजनवत्याघुणत्कान्तगाना
नागातङ्काधिनाशे विहिततताहिविद्राधयन्ती व माना ।
नामावन्तीति भद्रं कवहहहवक्तृत् पट्टपाक्षालगाना
नागारक्षातिकृज्जादृतललतदृक्भातिकंप्राकलीना ।।

(अयं श्लोकः कठिनार्थप्रमेयत्वाद्विद्वन्मोदाय व्याख्यायते- नालीकेति – **नानागारक्षातिकृज्जा** नानाविधा अगाः पर्वताः । शैलवृक्षौ नगावगौ इत्यमरः । तेषामारक्षा संरक्षणं तदत्यन्तं करोतीत्यतिकृत् । पर्वतचक्रवर्ती हिमाचल इत्यर्थः । सर्वशैलानां श्रेष्ठत्वात्तस्य पर्वतरक्षकत्वविशेषणम् । तस्माज्जायत इति तथा पार्वती । भाति प्रकाशते [1]भास दीप्तावित्यस्माद्धातोः कर्तरि लट् । सा कथभूता-नाळीकप्राप्तरक्षा नालीकेन पद्मरूपेणाध्यवसितकरेण प्राप्ता संपादिता(?) रक्षा जगत्पालनं यया सा तथोक्ता । "नालीकमम्बुजे वाणे । रक्षा–रक्षणलाक्षयोरिति च नानार्थरत्नमाला । संसृतिसमुद्रमग्नान् सर्वानभयहस्तं दत्वा संरक्षतीत्यर्थः । अत्र नालीकशब्देन कराध्यवसानात् रूपकातिशयोक्तिरलङ्कारः । विषयविषयिणोरन्यतरनिगरणेनाऽभेदप्रतिपत्तिरध्यवसायः । "रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः" इति लक्षणात् । **वनजज-**

---

1. भा दीप्तौ इत्येव साधु ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

**जनवती** - वनं जलं "वने सलिलकानन" इत्यमरः ।। तस्माज्जायत इति वनजश्चन्द्रः, स एव जं भूषणं यस्य स चासौ जनः शिवः तद्वती तदाश्रयभूता । यद्वा[†] वनजजः शिवः जनः भक्तजनः तद्वती तयोराश्रयभूता । तमर्धाङ्गत्वेन वहतीत्यर्थः । भक्तजनपरिपालनं करोतीत्यर्थः । "जं कटौ भूषणे पत्न्यां तेजस्यम्बुनि जन्मनीति" नानार्थरत्नकोशः । **आघुणत्कान्तगाना** आ समन्ताद्दिगन्तरेषु घुणत् भ्रमत् कान्तं च गानं गीतिर्यस्याः सा तथोक्ता । अस्या उच्चैर्गानेन दिशोऽनुगर्जन्तीत्यर्थः । **नागातङ्काधिनाशे** नागाः श्रेष्ठजनाः "सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचरा" इत्यमरः । तेषामातङ्कं भयं तस्याधिनाशे विषये **विहिततर्ताहिवित्** विहिता कृता तता विस्तृता हिः आश्चर्यकरी च वित् ज्ञानं यया सा तथोक्ता । राधयन्ती सेवयन्ती(?) सेवमाना वः अल्पः मानः प्रणयकोपः यस्याः सा । "स्त्रीणामीर्ष्याकृतः कोपो मान इत्यभिधीयत" इति । **भद्रं नामावन्ती** रक्षन्ती "शर्वाणी सर्वमङ्गले"त्यभिधानात् । **कवहहहवकृत्** कं सुखं वहतीति कवहः सचासौ हः शिवः । "हः शङ्करे हरावि"ति नानार्थरत्नमाला । तस्य हवः आज्ञा तं करोतीति तथा । आज्ञाह्वानाध्वराहवा इत्यमरः ।। **पट्टपा** पट्टं राज्यं पातीति तथा क्षालगा क्षालं शुद्धिरित्यर्थः । तं गच्छतीति तथा । **आदृतललतदृक्** आदृतं स्वीकृतमित्यर्थः । ललं लीला तस्मिन् लता । रलयोरभेदाद्रता सक्ता दृक् ज्ञानं यस्याः सा तथोक्ता क्रीडासक्तचित्तेत्यर्थः ।

---

† अत्र शिवस्य वनजजत्वमेवं अपि वनं शरवणं तस्माज्जायत इति वनजः स्कन्दः जः पुत्रः यस्येति ।।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कंप्रा चञ्चलचित्तेत्यर्थः। तरलं कम्पनं कम्प्रमित्यमरः। कलीना के सूर्ये लीना तिरोहिता सूर्यमण्डलमध्यवासिनीत्यर्थः। रवेस्त्रिमूर्तिस्वरूपत्वात्। एतादृशा कालिका भातीति पूर्वेणान्वयः॥ एतानि विशेषणानि स्तुत्यस्य वस्तुनः उत्कृष्टत्वसंपादनाय। अत्र पद्मबन्धाख्यः कश्चिच्छब्दालङ्कारः। तल्लक्षणं तु कज्जलेनाष्टदलपद्माकारं विलिख्यात्रकर्णिकास्थाने अस्य श्लोकस्य प्रथमाक्षरं लिखेत्। एकैकदलस्य पञ्च पञ्च कोष्ठानि कल्पयेत्। श्लोकद्वितीयाक्षरमारभ्य प्रथमदलकोष्ठेषु पञ्चवर्णानि(?) विलिखेत्। ततः द्वितीयदलचतुर्थकोष्ठमादिं कृत्वा तत्रैकं त्रिषु त्रीणि(?) अन्त्यस्थ(?) वर्णं द्विधोच्चार्य लिखितविलोमेन (पूर्वलिखितं विलोमतो वाचयेत्) तानि(?)वाचयेत्। ततश्चतुर्थे पुनरेकं पञ्चमे च। ततस्तृतीयचतुर्थमादीकृत्य तत्रैकं ततस्त्रीणि विलिख्य कर्णिकास्थानस्थेन नियोज्य पदं समापयेत्(?) कर्णिकास्थं द्वितीयपादादीकृत्य तेन सह चत्वारि वाचयेत्! तृतीये एवं त्रीणि पदानि पूर्वोक्तविधिना विलिखेत् तथा वाचयेत्। अत्र सर्वेषु दलेष्वन्त्यकोष्ठेषु मण्डलाकारेण कविनामोद्धरणं भवति,तद्वाचयेत् रघुनाथभट्टकृतिरिति। रघुनाथ इति कविनाम। भट्ट इति तद्वंशजानां सर्वेषां नाम। तस्य कृतिः प्रबन्धोऽयमिति शेषः[?] यद्यपि श्लोकस्यास्य क्लिष्टार्थकल्पनं [भवत्येव तथापि तत्] न दोषाय। सर्वालङ्कारमुख्यस्य सामान्यं कवयतां दुष्करस्य पद्मबन्धाख्यस्य निबन्धनात्॥ तदत्र कवित्वालङ्कारपारदृश्वानः शृण्वन्तु पूर्वं लक्षणमुक्त्वा संप्रति लक्ष्यं दर्शयति —

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

चू० –

अयिखलु(?) जगदम्बिके पूर्णिमोदितहिमांशुसमवदनांशु–गोपायितचकोरे, मेचकवेणिकाचक्रिणीमूल [1]वालपाश्यफणाग्रः च्छ[2]र्दितविषसंभावितविशेषकचिह्नितललाटचराभूतार्धजै[3]वातृके, रूपरतिजेतृके, मस्तकन्यस्ताऽम्लानकल्पकतरुपीलु[4] प्रवहितरस-पानलोलुपलोलम्बभ्रमकरभ्रमरकवि[5]भ्राजिते, लोकसंपूजिते मीनकेतनधनुःसमाननतभ्रूविभ्रमचमत्कृतितमाश्रवीकृतमहेश्वर - निजलोचननीलोत्पलनिःसारितकटाक्षपाततोषितभक्तजनपणा – यिते, तिलकुसुमायितनासिकावसितलसमानमुक्ताफले प्रणतवि-तरिता (?) ऽभीप्सितफलेऽधरबिम्बान्तरस्थैयस्करकबीजवैचि–त्र्यान्विते, पुरुहूतादिदेवतासन्नुते कर्णकालम्बिकर्णिकामञ्जुले नवमणिस्यूतहारालिसंवीतकण्ठावलिप्तसद्यक्षकर्दमे,[6] केयूरसित-शृङ्गायमाणांसकाऽऽलसितस्तनधरे, करवीणाधरे, सन्ध्याम्बुद-नीकाशवस्त्रितकौशेयचपलायमानरसनावलग्ने, बन्धूकस्तबक–शङ्कास्पदकुङ्कुमालङ्कृतपदपङ्केरुहाङ्कितहंसके, नानाविध – प्रसाधनप्रसादिते सर्वोपनिषदर्थगम्ये, सर्वामरीवरेण्ये, सर्व-कल्कविच्छेदके मदीयमनःसारङ्गकालिके कालिके पाहि मां पाहि ॥

---

1. वालापाश्य-वेणीमूलधार्यमाण भूषणविशेषः 2. वान्त 3. चन्द्र
4: पुष्प 5. भ्रमरक - सीमन्ताग्रधार्यमाणभूषणविशेषः 6. सद्+यक्षकर्दम = कर्पूरागरुकस्तूरीकुङ्कुमादिमिश्रितपङ्क

CC-0. Tsarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लो० –

नुतिभिर्लघुभिर्मनोहराभिः
स्थिरनिष्पन्नमुदद्रिराजकन्या ।
हनुमन्तमुवाच [1]राम साक्षात्
तव कार्यं भण साधयामि तात ॥ 61

दर्शयाद्य रघुनन्दनाविति
[2]प्रार्थ्यमानमनुकम्पया युता(?) ।
मारुतिं प्रति नतं कृताञ्जलिं
सा मुमोच धुरि भावितस्रजम् ॥ 62

पवनज शृणु तावदेष शत्रुः
मयि नृवरावपहृत्य यौ न्यधत्त ।
अहमथ हृदयाब्जवर्तिभावं
मम विनये ध्रुवमन्यथा स हन्यात् ॥ 63

बलिन् प्रसादान्मम संविदि त्वं
रिपून् पराभूय समागतश्चेत् ।
भवान्तदं मानवसूनुयुग्म–
मवाप्नुहि ब्रह्म परं व्रतीव ॥ 64

कालीयमित्थं व्याहृत्य मौलीधृतकलानिधिः ।
युवामालोकयामास युवानावर्कवंशजौ ॥ 65

1. इदमगस्त्यवचनम् 2. प्रयोगोऽयं चिन्त्यः ॥ प्रार्थयन्तमनुकम्पया

CC-0. Saraswati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दोर्दण्डैः परिमण्डितौ रणचणैः सर्पेशभोगोपमै-

स्तूणीराशुगचापधारणपरौ पेटान्तरस्थायिनौ ।

राजद्वल्कलधारिणौ घनरुचौ निद्रावशत्वं गतौ

शूराग्रचौ स युवां ददर्श हनुमान्सोमाननौ राघवौ ॥

रामार्यदर्शनमिदं सुखदं प्रजानां

भक्तान्यदुर्लभमुपेत्य बभूव वातिः ।

सन्तोषनिर्भरजलोर्मिपरम्पराभिः

सन्नह्यिताभिरवदारितचित्तपारः ॥ 67

सप्रश्रयं प्रणमतो हृदि राघवाय

काल्यादृताय विभवे पवमानसूनोः ।

युद्धाशुचि परिजिहीर्षुतयेव मूर्ति-

मानन्दबाष्पविसरः स्नपयांचकार ॥ 68

इति श्रीरघुनन्दनपदारविन्दवन्दनकन्दलितसाहित्य

सनाथेन रघुनाथेन विरचिते मारुतिविजय-

चम्पूकाव्ये राघवदर्शनं नाम

पञ्चमः स्तबकः ॥

(श्लो सं 70 गद्यसंख्या 14 समग्रसंख्या 84)

---

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ षष्ठः स्तबकः ॥

——x——

श्लो० –

देवीं नत्वा तदनु हनुमान् राक्षसान् हन्तुकामः
क्रान्त्वा सौधं प्रळयघनवद्घोषिताशं जगर्ज ।
श्रुत्वा ध्वानं तमशनिसमं रावणः श्रोत्रफल्गुं
मैवर्णाग्रो मदकल इव भ्रान्तिरक्तेक्षणोऽभूत् ॥

वृषपविशतघातत्रस्तकल्पाम्बुवाह-
प्रचलितनिजगात्रः कौणपानामधीशः ।
उपजिगमिषुमुग्रं क्रोधमेनं जिहीर्षुः
स इव परिकरान्तात्पेशलादुत्थितोऽभूत् ॥ 2

[1]सन्त्यक्वा(?) मुदमिव तल्पमङ्गनाया
निद्रायाः परमुपयानमास्थितायाः ।
अन्वेष्टुं पदमिव दिक्षु वीक्षमाण-
[2]श्चिन्ताया वशतरतामुपेयिवान् सः ॥ 3

चिन्तितस्य कुपितस्य महीयो (यान्)
व्याप्तुमुत्क इव भाविसमीके ।
वर्ष्मनिर्गलितपक्ष्मविराजो
रक्तिमा नयनयोः स्थितिमायात् ॥ 4

---

1. त्यक्त्वासौ ... ...    2. चिन्ताया वशमगमन्निशाचरेन्द्रः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कलहभूमिषु विद्रवमाप यः
क्षतजसिक्ततनुर्दितपट्टसः ।
धुरि सगद्गदवाक् प्रभुमाजवा-
दुपससर्प स सर्प इव श्वसन् ॥ 5

[1]तदागति(?)र्यातुपतेः पुरस्ता-
त्प्रवासकाले शकुनं यदासीत् ।
तत्प्राणविद्रावणकारणस्य
सा सूचनाऽऽगामि पराजयस्य ॥ 6

हनूमतः शौर्यवदग्रगण्यात्
स कातरस्वान्ततया [2]द्रुतोऽलम् ।
निवेदयिष्यन्निखिलां प्रवृत्ति
मैरावणं दृष्टिभिरालिलिङ्ग ॥ 7

समीक्षया नेतुरिवास्य कृत्स्ना
संधाविता भीः किमदुद्रवन्न ।
सूर्योदयेनेव तमिस्रराजिः
प्रेष्याधमानां शरणं विभुर्हि (?) ॥ 8

इहेव वाचाट इति प्रजानां
वाक्पाटवं स्वं प्रकटीकरिष्यन् ।

---

1. तस्य आगतिः शकुनमासीत् ॥ कलहभूमेः पलायितस्व कस्यापि राक्षसस्य आगतिः 2. अरम् अलमित्युभयं साधु ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पलायनोत्पादितसंभ्रमेण
[1]ससर्ज भृत्यः सह मौनमुद्राम् ॥ 9

कश्चिदीश कपिरङ्गवलूलः[2]
कञ्जनालविवरादुपसृत्य ।
द्वारपानिव चिरं गतमीलान्
सर्वंवप्रमनयच्छकलंत्वम् ॥ 10

अस्माकमेव परिपन्थिरपि प्लवङ्गो
रात्रिंचरान्सपदि धर्मपदं निनीषुः ।
प्रासादकुड्यशिखरेष्वथ सञ्चरन् स
[3]युष्माकमाह्वयति गर्जनकैतवेन ॥ 11

वृत्तं प्रवृत्तमधियामिनि शुश्रुवान् यत्
क्रव्यादनः प्रबलमन्युशुचिं पपाट ।
तन्निर्णयं गलितमारुतलक्ष्यतोऽतो
नासापुटाज्ज्वलनसूक्ष्मकणा निपेतुः ॥ 12

कोपपाटलितमीक्षणयुग्मं
रक्षसो भ्रुकुटिकल्पितदूरम् ।
तस्य किञ्चिदुदभूदपि भेदं
पद्मरागमयिकर्णिकयोर्न ॥ (?) 13

---

1. उत्ससर्जेत्यर्थ ॥ 2. वलूल बलिष्ठ इत्यर्थः ॥
3. युष्मान् समा ... ...

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

कठिना न सन्ति रदना इति वा
स परीक्षितुं किल निशाचरपः ।
अभि वानरोत्तममरं रुषितः
कटुशब्दकारि सुददंश रदान् ॥ 14

कीलालजालकतरङ्गितमातितीर्षु-
र्जन्यार्णवं करधृतेन रसोडुपेन ।
रोशानलैर्विधमयन्निव वृक्षवल्ली-
राज्ञामभुष्य सचिवानयनाय सोऽदात् ॥ 15

रक्षःपतिर्धृतिगुणेन विवास्य गेहा-
दास्थानमण्टपमियाय नवोपलाढ्यम् ।
उक्तास्तमेव सचिवा अपि चेटकेन
वाताहता इव घनाः कनकाचलं द्राक् ॥ 16

चू० –
तदनन्तरमनन्तकरदर्पान्तकर चिरन्तनरीत्यनुगुणचिन्तन, राजन्, युष्मदक्षिकोणज्ञापितानि कार्याण्यार्याणामभिमते सन्नद्धाः सन्तो वयं विहाय कायानपि सिसाधयिषवः किमुतान्यानि संप्रति कर्तव्यं किमाकर्णितुमभिलषाम इत्यभाणिषत(?) अमात्यपराध्र्याः

स राक्षसाध्यक्षो लंकापुरादायातो मदनिष्टाचरणैकतानमनाः कश्चन जाल्मो वनौकोऽपशदो निषूदितव्यो युष्माभिरित्येतानचोदीत् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

ततस्ते तदीयं हवं वहन्तो मूर्ध्निष्वर्धराशिमिव (?) मूर्धस्वर्थराशिमिव, नियोजयमानाः सैन्यपान् सन्नाहेषु चम्वाश्चङ्क्रमणजल्पाकैः कल्पकल्पिताभ्रध्वनिकल्पैर्निःसाणनिस्वानैर्दिग्गोळं निर्घोषयन्तः प्रत्येकं पृषदश्वजवचतुरश्वयन्त्रितेषु हैमदामामुक्ताङ्गेषु शताङ्गेषु [1]तस्थिवांसोंऽसलद्विषे जनुषा रुषाऽभिषिषेणइषवः (अभिषिषेणयिषवः) रथनिधा(खा)त [2]लोहितकधाम्ना निसर्गेण च पुनरुक्तरक्तिमधामानि नीराजनी-(ना)विधिसमिद्धित (समिन्धित) हुताशनशिखाशङ्क्यमानबभ्रूर्ध्वकैशिकविभ्राजि बिभ्राणा [3]भ्राष्ट्राणां पाश्चात्यभागानीव (निव) मुखभागानि (न्) शात्रवपत्रिसार्थप्रदरप्रतिपादनजागरित [4]जागरस्थपुटितवक्षसो [5]दक्षसोपस्कारास्तरक्षप[6] (व) इव गिरिकन्दरान्निजमन्दिरान्निष्क्रान्ताः [7]विक्रान्तदन्तावलपंक्ति – गर्जितैर्मंदिर [रा] पानमदोत्कटपादाततर्जितैर्वाहनकालनैकायनयन्तृप्रापय्यमाणरथाङ्गक्रीङ्कारैः रथान्योन्यसङ्घट्टनक्रेङ्कारै–र्हस्तिपकाहोपुरुषिकाम्रेडित प्रतिभटभाषितैर्घोटकच्छटाहेषितैश्च[8] विभिन्दन्तो जगदण्डं कुण्डलीकृतकोदण्डमण्डितदोर्दण्डाश्चण्डभानव इव [9]वृत्रसङ्घान् निराकरिष्णवः करवालमुसलगदाद्यायुधधारिणो दारुणाः संवर्तकालरात्रिगणा इव तमःप्रतिश्रयाः

---

1, अंसलद्विषे-अतिबलिष्ठशत्रवे 2. ताम्र (Copper) त्विषा 3 दीप 4. कवच 5. विशिष्टयुद्धोपकरणसंपन्नाः 6. तरक्षवः व्याघ्रजातीया भीकरप्राणिनः (hyenas) 7. गज 8. अश्ववृन्द 9. वृत्र-तमः

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

[1]शिखावला इव ध्रियमाणकलापाः शाखिन इव खगाश्रयाः नितान्ततन्त्रिणो मन्त्रिणश्चक्षुरुषर्बुधाभिर[2] [चक्षुरुषर्बुधैर]न्धयन्त इव सौधस्थले स्थितिमन्तं वलीमुखवरीयांसं [3]सधृष्णुं धीरोद्धत-मेनमीक्षांचक्रुः ॥

श्लो० –

स्वतो नृत्यल्लक्ष्मीश्लाघितो वालवौकः [?]
स लङ्केशारातिः कौणपीयं च सैन्यम् ।
द्वयोरासीद्घोरः सङ्गरः सत्वभाजो-
र्महामेरुः[रोः]सिन्धु[धो]र्मानिवेशेव[4] मह्याम् । 20

श्रेयांसस्ते धन्विनामभ्यमित्रा-
रोपैरन्ये पट्टसैर्वातिमन्ये ।
गावैरन्ये(?)चन्द्रहासैर्ववर्षुः
सान्द्रासारैर्वारिवाहा इवाद्रिम् ॥ 21

[5]शत्रूत्सृष्टाः खगनिकरा ये
रिङ्खत्पत्रा लिलिहुरंयं (ररं तम्) ।
हुङ्कारेण प्रभवसमीरैः (?)
व्यावृत्तास्ते पवनसुतस्य ॥ 22

---

1. मयूराः 2. उषर्बुध-अग्निः 3. धीरम् 4. मानदेश हे राम ।
5. शत्रून्सृष्टाः खग(शर)निकरा ये रिङ्खत्पत्रा लिलिहुररं तम् ।
ते हुङ्कारप्रभवसमीरैः प्रत्यावृत्ताः पवनसुतस्य ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

निर्गच्छन्तो रिपुजनमुष्टिच्छिद्रा-

द्खड्गव्यालास्तरळ(ळं)राजन्तः ।

वातेर(रे)ते कठिनतनूनिर्भिन्ना

'रक्षःकूटान् शकलगरैः घ्नन्तिस्म ? ॥ 23

सेनेक्षणोत्पन्नकुतूहलेन

तेने कपिः क्ष्वेळितमट्टहासम् ।

हेतिप्रहाराशनिशोषणार्थं

सूतस्तदाराव इव व्यराजीत् ॥ [?) 24

क्ष्वेळया कश्मलं विन्ना निपेतुर्भुवि तामसाः ।

समं पादपनीडान्तसुखनिद्राणपत्रिभिः 25

निवासभूमेर्निशशाल [निचचाल] सैन्ये

स वायुसूनुः प्रथमानतेजाः ।

प्रेक्षावतां दृष्ट्यपहारकल्पो

दावेऽशनिर्वा विषवाहपङ्क्तेः ॥ 26

उपर्युपर्याशरकान् मुछन् [विमृद्नन्]

स यत्र यत्र न्यपतत्कपीशः ।

नालक्षि रक्षोऽपघनो मनाक् च

किन्त्वत्र तत्रान्तर [आन्त्र] वपादिधातुः ॥ 27

---

1. रक्षः कूटान् शकलं घ्नन्ति स्म ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

हुङ्कारेण क[प]लाशिनः कतिपयान् क्षोदीयसो मूर्छयन्
लाङ्गूलेन गजोपमान् कतिपयान् आवेष्टयन् व्योमनि ।
पद्भ्यामम्बुदसन्निभान् कतिपयान् स च्यावयन् क्षोदयन्
हस्ताभ्यां क्षितिभृत्समान् कतिपयान् सङ्ख्यं व्यधाल्लीलया ॥

शयेन कीटानिव मृद्नयिष्यन्
अयं दत्रो यं प्रतिनिर्दिशन्तान् ।
तस्याः स तस्या विबुधाङ्गनानां
वरानिवैक्षिष्ट वृणीषुरित्थम् ॥ [?] 29

स्तम्भं भारशतेन निर्मितमिदं तीक्ष्णेन संस्फारितं
द्राघीयस्त्रपुमंटपादपहृतं संक्षोभयन्सर्वतः ।
ताक्ष्यंश्चक्रिणमेवमाशरपतीन्तेनांजसा योजयन्
संभंजन् खरदूषणादिभिरयं चिक्रीड सस्वान च ॥ 30

रे रे राक्षस कुत्र यासि समरे तिष्ठात्र निष्ठ्यूतत–
द्रक्तस्रोतसि विस्तृते नपिहितस्त्यक्ष्यामि नो जातुचित् ।
तथ्यं पातक हन्मि हस्तकलितग्राव्णेति स [1]स्मारटन्
वातिर्दोहृदगर्वपर्वतभिदा दम्भोलिरुज्जृम्भते ॥ 31

द्विपावद्यारूढानदितिजरथारूढ सुपिसः ? [[2]सुपितः]
पदातीन्निम्नास्यान्शमनपुरशृङ्गाटकगतान् ।

---

1. सः आरटन् उज्जृम्भते स्म । 2. श्रीरामविशेषणतया (उत्तमपितृमन् इत्यर्थे प्रयुक्तम् । )

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

वमन्तीर्दानानि द्विरदघटनाशोणितनदी-
र्हयान्निर्यत्फेनानकृत स परासूनधिकलम् ॥ 32

शल्ककी[ली]कृतरथैः सचिवाद्यै-
र्लूनपूर्वपशुमांसलपीन्नै[नै]: ।
स्तम्भनिर्दळितगात्रमहीध्रै-
र्जम्बुकान् स सवृकान्समतार्प्सीत् ॥ 33

चू० –

ततः प्रहृतशेषनिशमिताक्षो [क्षौ] हिणीनिधनेनाति-क्रोधनेन ब्रह्मदण्डभुवाऽधिभुवा नियुक्तानां कार्मुकेषु मार्गणा-रोपणमोचनादिनिस्तुलहस्तशिक्षाणां प्रस्तुताश्रितपक्षाणां ध्रियमाणायुधरथादिकारोहपादचार्यनेकयोद्धात्रा [योद्ध्रा] द्विगुणितबाहुलेयलपन‡संख्यावतां कक्षानुषङ्गनिषङ्गभुजङ्गपरि-भ्रमदसङ्ख्येयशराणामाशराणां यज्ञवाटहटज्जातवेदोऽसह्य – महसो वनौकसश्च दर्शकजनावेगजनकं जन्यमजनिष्ट ।

तत्र सुत्रामविक्रमप्रक्रमः प्लवङ्गमरूपेण प्रेतराडयमवतीर्ण इति नैर्ऋतानां रसातलप्लोषणायोषर्बुध इति सुरद्विषां खलि-नीलवनपूर्वकं सर्वजनावननिर्वहणाय शर्व एवेति सुपर्वणां नः शर्मदातृकमितृसम्पादनाय चतुराननेन निर्मितश्वश्रू[श्वशुरोऽयम्] रयमित्यप्सरसां मनःसंप्रधारणमादधानो विस्तृतोत्तेजनप्रस्तरो-

‡ मुख

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्तेजितपाण्डुद्युतिभिरभिनददसृपाचरितक्षिपैः(अभिनन्ददसृक्पाना-चरितक्षिप्तैः) कौक्षेयकादिभिर्निजवर्णतौलिकाऽतितिक्षुत ऐवा [यैवा] धिकमभिहन्यमानहिमाद्रिविग्रहः पश्चात्करणरोषेणेव शिञ्जिन्या निष्कासितैराशुगैः स्वनामवाहसूनुरयमित्यसूयए-[ये]व निरुच्छ्वसीकृतोऽपि पूषा तुषारानिव तान् धून्वानो हनूमानादिकोलः सलिलनिधिमिव जर्झरीचकारानूनकमनीकम् ॥

श्लो० –

जगत्त्रयभयान्तकृज्जरठहास्तिकोष्ट्रावृतं
सुरर्षिमददायकं मुदितकौशिकालोकितम् ।
दिगीशपरिहास्यदं स्ववृहदङ्घ्रिघातस्फुट-
द्रथप्रहरणायुतध्वनिकृतासुरस्वागतम् ॥ 34

भयद्रुतपदातिगं भवुकसिन्धुपारङ्गतं
भ्रमद्यमभटावृतं शमितशूरसंभाषणम् ।
निकारितपलाशिनां कुलमहा(हो) विदेहावलि-
स्रवद्रुधिरनिर्झरप्लवचलत्प्रमीतद्विपम् ॥ 35

समुत्सुकितवञ्चकं पललपङ्कमज्जद्ध्वन-
द्रथाङ्गगणमन्दिताटनशताङ्गशेषाकुलम् ।
दुरापवलदुर्जयानिलभु(भ)वाक्रमेणाधिकं
निशाटनपतेर्बलं कृशदशामनायि प्रभो ॥ 36

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

भूयांसि रक्षांसि ससैनिकानि
रक्त[1]स्रवन्त्येव वपु(:)क्षरन्त्या ।
स शान्तवीर्योष्मजडीकृतानि
चक्रे हनूमान् यमपाशयुञ्जि ॥ 37

चू० –

सोऽथ खल्वेतद्वृत्तान्तश्रवण प्रतिघ[2]प्रेरितरक्षोऽध्यक्ष-प्रेष्यमाणान् चतुर्दशसङ्ख्यासङ्ख्यातान् दुर्दण्डदन्तुरप्रभृती-नेकैकश: कोटिपरिमिताभिसरैः सह समासरतस्तुमुलाऽऽस्कन्दन-धरण्यामात्मशक्तिष्ठतां विशदयतस्तान् हनुमान् भावुकवर्धना-भिलषमाणान् घृणयैव वर्धनमनयत् ॥

श्लो० –

अथ हि पावनिसन्धुतभूमिजै-
र्विमलि(थि)ताङ्गधरा हृतशेषका: ।
परिमृडं (परिवृढं) प्रति वृत्तमवोचिरे,
ऽखिलमहीन[3] महीनपराक्रमम् ॥ 38

तरलितोष्टपुटोऽथ निशम्य तल्-
लपनलोमर्तातं मुहुरामृशन् ।
अपरवानपि कोपविधेयतां
निजगृहे जगृहे ण (ऽण्ड) भुगीश्वर: ॥ 39

---

1. स्रवन्ती निम्नगापगा 2. प्रतिघ-प्रतिघात
3. अखिलमहीनं - राजानम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नेत्रालोकनकीलाभिस्त्रैलोक्यं भस्मसादयम् ।
चिकीर्षुरिव नाथस्य दिदीपे क्रोधपावकः ॥ 40

वैवस्वतान्तिकभुवं रघुवर्यदूतं
नेतुं स्वयं रचयितुं निजकीर्तिनिष्ठाम् ।
कर्तव्ययुद्धगमनाय स तत्वरे य-
त्स्वर्गौकसामधिकहर्षकरं तदासीत् ॥ 41

चू० –

तदा तदादेशानुरोधिना दासेरेण केनचित्तत्क्षणमुपमापितं सत्यमस्य वधं विधापयितुममुमल्लायाऽऽयोधनतलं विनेतव्य (?) इत्यवहितेन वल्गभतामियता मारुतेनेव जङ्घालतया समुन्न-मिताग्रकायेनोर्ध्वज्ञुना[1] निसर्गतः दविष्ठाटनरतेन घोटकशतेन प्रतिमुक्तयुगसन्ततिं प्रकम्पनसम्पर्कपरिप्लुवत्पटं स्थूपीभूतकार्त-स्वरघटं मूर्ध्नि धारयन्तं सर्वत्रसन्दानितमणिसन्दोहसंस्विन्द-त्प्रभाज(जा)लमालासुशकुला(ना)यमानैश्चलद्भिरीषत्क्वणद्भिः किङ्किणीभि (?) राकृतिशौक्ल्याभ्यां चन्द्रमसं ग्रसन्तीभिः रस-गुळिकाभिर्गुम्फितं पूजितैस्तेजितैर्नैकभेदायुधैर्निवेशीकृतैकदेशं कृत(क)हंसघट्टितमप्यनन्यहंसजुष्टं[2] चक्रधार्यमाणमप्यवर्तमान-चक्रमात्तं विकस्वरभास्वररोचिःसमूहकपटेन समुत्पतिष्णुमिव जिष्णुरयं वैयाघ्रवल्कलाचितकुथं रथमायुरन्तमिवाधिरोढु -मुदयुङ्क्त ॥

---

1. उन्नमितजानुना 2. नृपान्तराजुष्टम् ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लो० –

तेजोविशेषरयरोधनसंविनीतै-

र्वल्गा[1]विवेचनपरैर्हयघातनज्ञैः ।

षट्प्रेरणेषु चटुलैरधिभूश्चतुर्भिः

सज्जं स यन्तृभिरितं रथमध्यरुक्षत् ॥ 42

सोऽलंचकार रत्नाढ्यं स्यन्दनं सर्वनन्दनम् ।

[2]गुल्मात्यर्थेन संवीतं भास्वान्वो[3]दयभूधरम् ॥ 43

सारङ्गवारपमुदारधनुःप्रकाशं

धारानुपातनविलोळितमम्बराप्तम् ।

नीलप्रभाप्रसरणाधरितेन्द्रनीलं

तं मेनिरे कनकसानुनिषण्णमेघम् ॥ 44

आवर्तसन्ततिपुषो वृहदुल्बणोर्मि-

शुक्तयुत्तरानवपथा ... ... ... ... ।

सिन्धुप्रवाहभरिता इव संप्रकीर्णाः

सङ्भ्म्यमानपुरुषास्तुरगाः प्रसस्रुः ॥ 45

पद्मव्यूहभवैः परागपटलैरभ्रं समस्तं धनैः

कुर्वन्तीभिरिवावृतं कलकलारावातिपत्तादिभिः ।

भूयः स्यन्दनसंभृताभिरभितः संवाहिनीभिर्वृतो

भूभृद्भावितपक्षरक्षणविधिर्दक्षः प्रतस्थे पुरः ॥ 46

1. खलीन 2. सेनाविभागः 3. इवार्थेवाकारः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पुरस्कृत्यान्योधान्गमनभुवि पश्चाद्रचयतः
 पुरो जय्यानेतानपि शितकृपाणद्युतियुजः ।
महाक्रोधौत्सुक्ये कपिवरहठात्कारपरुषं
 मुहुः स्मारं स्मारं नवनव इवास्तामधिपतेः ॥ 47

चू० –

सोऽयमध्यवसितयुद्धागमनाटोपध्वनदुपगूढदिक्तटसैन्यमन्द्र-स्वनस्फुटिताण्डकटाहः प्रध्मातशंकः (शङ्खः) संवर्तसमयसमु-द्वेल्लितसमुद्रसप्तकमिव त्रिभुवनस्य भीतिमुत्पादयन् बलवानहं सांयुगीनोऽहमित्यभिमानतः संमुखीनान्यतीव नृशंसान्यपशकुना-न्यगणयन्विभुरयं (?) पुनर्निवर्तनाबोधमायोधनक्षितिं प्राविक्षत् ।

अथावितथमनोरथप्रथीयसीं षड्गुणशक्तिसंपदं गोपाय-मानः सौधाग्रिमाणमावसन् हर्षतुन्दिलात्माऽऽत्मनीनमुत्तरकृत्यं निर्मिमीडुः (?) (निर्णिनीषुः) प्लवङ्गमपुङ्गवः सूर (शूर) पूर्व-पद्मासुरसदृक्षं राक्षसपमक्षियुगळस्य लक्षीचकार ॥

स परिभवन्निवोत्थानोत्थिताऽऽरावं प्रत्यर्थिप्रमापणस्थूल-लक्षं क्ष्वेलितमुत्सेधेन वितत्य प्रतिपक्षं प्रतिजजक्ष ॥

श्लो० –

 च्योतन्मदाम्भःकणगन्धभाजां
 दिग्दन्तिनां भूवहनत्वराणाम् ।
 श्रवांस्यभाङ्क्षीत्कपिसिह्मनादो
 व्यमोहयत्तान् किमुचक्रचारीन् (?) [रान्] ॥ 48

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

निर्धूय रोद्धॄन् शलभान्व योद्धु-
माधोरणान्स्यन्दनिनश्च सर्वान् ।
प्रत्युद्ययौ राक्षसमुख्यमेव
सर्वे हि वाञ्छन्ति बलानुरूपम् ॥ 49

रक्षोऽधिपोजिह्वग[ऽजिह्मग]शस्त्रिकाद्यैः
कापेयकायं कुपितस्ततक्ष ।
स्वके करे ताण्डवितैः कुठारैः
जीमूतकं वैतनिको व मूर्खः ॥ 50

वातात्मजः प्रेष्ठवपुर्नगो व
सूतैः समं तस्य हयानलुञ्छत् ।
पिता मदीयो जवनैरमीभि-
र्जितः परैरित्थमसूययेव ॥ 51

उत्पाट्य वातिमधिवाहिनि संपतन्तं
तं सैनिकाप्यधुरमीशितरोपवर्षैः । [?]
तात्कालिकाहतिभृशाविलदूरभाजो [?]
... ... ... ... ... ... ... ... ... ॥ 52

शिलीमुखव्याप्तसनीडदेशाः
स्थलीमतस्तीर्थगतासुनीताः ।
अमी पलाशा धृतरक्तवर्णाः
समीरजातेन जवेन तेन ॥ 53

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

प्लवने विनतातनूभोऽयं
तुटने पक्षिगिरी रथादिकानाम् ।
हनने युधि देहिनां कृतान्तः
खगतैरैक्षि सुरासुरैः कपीशः ॥ 54

स्थूणया घ्नति निशाटनसेनां
वानराग्[ग्र]णिविशेष स एकः ।
ज्वालयेव परिखादति दावे
मध्यगः क्षितिधरो वनवाटीम् ॥ 55

पुष्टयोः कपिनिशाटनपत्योः
पु[रु]ष्टयोः प्रतिभयं मृधमासीत् ।
तेन विस्मयपदेन सुरर्षेः
पश्यतोऽनुभविनः पुलकोऽपि ॥ 56

उल्कावखण्डप्रतिमच्छवीनि
वृष्टानि सामन्तशिखो?[रो]बलेन ।
आत्मीयकण्डूयनसाधनानि
तान्यग्रहीद्घाणकुलानि वातिः । 57

शस्त्राण्यास्फालितानि व्यतिकरमभय[ज]न् वायुजेन स्थिराया-
मस्त्राणि व्यर्थभावं प्रतिपदकमधुः कौणपेन्द्रान्महान्ति ।
वातापत्याङ्घ्रिघाताद्विशकलितमभूत्स्यन्दनं मन्दरोरु-
व्यावल्गत्पाणिपादं स सकृदमरदृक्भूमिमेवाललम्बे (?) ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

जयश्रियस्थानमनिर्णयत्वा-
न्नभःसदातङ्कविधायि तुल्यम् ।
नियुद्धशिल्पं चिरमाकलय्य
व्यचूचुरद्वातिरसूनमुष्य ॥ 59

अध्यूषुरन्यं रथमाप्तजीवनो
मैरावणो नाम महाबलाहकः ।
तिर्यग्विसंसर्पिकल[द] म्बवर्षकै-
र्वर्षर्तुशोभां स्म सृजन्नुदेति सः ॥ 60

परीक्ष्य हनुमानाजौ राक्षसाध्यक्षकौशलम् ।
तन्निबर्हणमुज्जज्ञे संमानमरिकर्शनः ॥ 61

रथिकः कवची शिलोच्चयात्मा
कुहनाभाजनमासदत्समं सः ॥
क्षणदाटपतिर्भियामभूमिः
समरं वायुसुतेन मर्दनं च ॥ 62

मायविद्याविलासप्रकटनचटुलो राक्षसेन्द्रोऽपि[वि]धूर्तो
भूत्वा शक्त्या मृगेन्द्रो विवृतमुखगळद्ध्वाननिध्वानिताशः ।
दंष्ट्रास्थिस्वेत[श्वेत]कोटिग्रथितकरिवपुःस्यन्दिरक्तप्रवाहो
व्याधून्वत्केसराळिव्यथितजलधरो वायुजं सोऽभ्यगच्छत् ॥

हरिशब्दं मृगेशस्य वासहिष्णुतया हरिः ।
व्यधादन्तमथ क्रव्यात् साचिदन्तो गजोऽभवत् ॥ 64

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

स्तम्बेरमं पवनभूः करटान्तराळ-
निष्पन्ददानजललोलुपबंभराप्तम् ।
लङ्कापतेः शमनपट्टणसंभविष्य-
दुद्योगयोग्यमुदपादयदौपवाह्यम् ॥ 65

दीव्यतामुरगपुङ्गवाशिषां-
भूयसां स विषयीकृतः कपिः ।
गारुडं किमपि (कमपि) मन्त्रमुच्चरन्
कोपहर्षभिदुरो व्यभासत ॥ 66

काकोदरं घनफणामुखगीर्णमान-
क्ष्वेळातिवेलदहनाविटपीकृतोर्वीम् ।
रक्षःस्वभावगुणभुग्नत्रियामभोगं
मन्त्रोदितो त्रिहगराडघसत्मवातेः ॥ 67

महिषाकृतिरधुषत् (?)
स द्विपदुत्तम्भितसूर्मिमद्विपाणः ।
समलम्बत पुथुलाङ्गो
हनुमद्दर्दुरलेखनं करीव ॥ 68

यमवाहत्वमुत्सेधं प्रापय्य कपिशातनात् ।
मृगद्विट्त्व(म)गृह्णात्स जात्या रीत्या च कौणपः ॥ 69

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

नखरैर्निशितैः खरैश्च युक्तं
स्फुटशुक्लासितशोणलोम भान्तम् ।
विवृताननमेष पुण्डरीकं
रसितारं कपिरुच्चकैर्जघान ॥ 70

पुनः पुनः कन्दलितं प्रकोपं
रूपं यथापूर्वमथायतोर्हि ।
चिराय शाखामृगयातुनेत्रोः
प्रावर्ततान्योन्यमभिन्नयुद्धम् ॥ 71

श्लथवत्स[1] विनिर्यदस्रधुन्या
घनकंकेलिविनिद्रगुच्छकान्ती ।
उदयास्तगिरीव[2]सङ्गतौ तौ
तनुसंस्फोटनसंस्वनावभास्ताम् ॥ 72

चू० –

एवमधिनिशीथिनि स वलीमुखपुरःसरः चिरतरमनेन निशाटनेन सह बलोत्कर्षापकर्षयोः पणभूतप्राणविश्राणनां समरदुरोदरक्रीडामाकलय्य तन्निर्वापणेन समं तां निर्वाप्य पुनरप्यङ्कुरायमाणप्राणसमीरणसनाथं तं प्रत्य"हो शतवार-प्रहारेणापि न नश्यत्ययं किं सञ्जीवकरण्याद्यौषधप्रयोगेण, किं वास्य मायानैपुण्येने"ति मन्देतरं सन्दिहानः समुपेतयाऽस्र-दुर्दण्डया सादरमभ्यधायि ॥

---

1. वक्षस् 2. इवार्थे व शब्दोऽत्र प्रयुक्तः मणीवोष्ट्रस्य लम्बेते इतिवत्

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लो० –

हनूमन् कोऽपि योगो[1]ऽस्ति
श्रृण्वेतर्हि समाहितः ।
विना येन न शक्योऽयं
निहन्तुं कुणपाशनः ॥ 73

पूर्वस्यामत्र काष्ठायां त्रिंशद्योजनदूरतः ।
गुहाभिः सप्तभिर्युक्तो वर्तते धरणीधरः ॥ 74

दर्यां महत्यामन्त्यायां गण्डशैलो निषीदति ।
मुनिसङ्ख्यबिलान्यस्मिन् हरिनन्दन याहि तम् ॥ 75

तेषु यात्वधमप्राणा मधुव्रतसरूपकाः ।
सञ्चरन्त्यंशभागेन विच्छेत्तव्य. स तैः समम् ॥ 76

तदीयवचनादित्थं हृष्यन् हृदि मरुत्सुतः ।
ससारथिं रथं भङ्क्त्वा तथा कर्तुमियेष सः ॥ 77

युयुत्सोः कौणपेशस्य स्वपुच्छमधिकन्धरम् ।
नध्वाऽऽकृष्य स गोत्राया (गोत्रेऽय) मगच्छदधिकन्ध (द) रम् ॥

श्वभ्रं तदभ्येत्य कपिः क्रमेण
प्राणा द्विरेफाः परिणेमुरस्मिन् ।
तानेकदा (धा) विद्विषता नियोज्य
पिपेष सर्वानसहायशूरः ॥ 79

---

1. युक्तिः उपायः ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

तदानीमक्षोभ्या बलिभवनचक्राधिपदशां
विहाय क्षेपिष्ठं [1]... ... ... ... ... यमपुरन् ।
र(अ) यांचक्रे माणी(नी)प्रियविकलखेदाक्षमतया
दिदृक्षुः क्रव्यादान् क्षणिकमिव लालाटिकगणान् ॥

पुत्रस्य मत्स्याधिपतेर्द्वितीयां
सम्पादयिष्यन्निव मातरं सः ।
कान्तामनिच्छुः प्लगेश्वरोऽपि
जयश्रियं कामपि पर्यणैषीत् ॥ 81

प्रकरिताः शतमन्युपुरःसरा
दिवि भूविस्रवितैर्मधुभिर्वृताः ।
उरगकिन्नरबाहुभिरुज्झिताः
सुमनसः प्रमदं पतनं दधुः ॥ (?) 82

इति श्रीरघुनन्दनपदारविन्दवन्दनकन्दलितसाहित्य–
सनाथेन रघुनाथेन विरचिते मारुतिविजय
चम्पूकाव्ये मैरावणवधो नाम
षष्ठः स्तबकः ॥

---

1. पल्लभुगधीशो

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

## ॥ सप्तमः स्तबकः ॥

अथ दलितनिजाधिर्दुर्जनोन्माथनेन
व्यपगतदुरितौघो नीलमेघो गुणाढ्यः ।
अधिसभमुपपन्नं मारुतिं तन्नियोगात्
गलितनिगळबन्धः सोऽक्षिलक्षीचकार ॥ 1

श्रिया समेतं कपिसत्वभाजं
निर्वाणभूमप्रदमाश्रितानाम् ।
स नीलमेघोऽस्तुवद् (?)अञ्जजा(दा)प्तं
हरिं बिडौजा इव हृष्टचेताः ॥ 2

सूर्येण सूर्यदृषदीव कपीटयोनि-
स्त्वं मारुतेत हनुमन् जनितोऽञ्जनायाम् ।
भानुं समीक्ष्य सहकारफलं बुभुक्षु-
स्तत्सन्निकृष्टमगमः श्रमलेशशून्यः ॥ 3

सङ्क्रन्दनीयकरमुष्टिविमुच्यमान-
वज्रायुधाञ्चलविशस्तहनुद्युते ते ।
लोकत्रयीमपगतासुमलं समीरे
कुर्वत्ययं वरमदाच्चतुराननोऽपि ॥ 4

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

शिष्यत्वभेत्य तरणेरथ वर्णिभूतो
भास्वानिवास्त्रनिचयैः परतापकारी ।
मेरुप्रदक्षिणपरानविलम्बितेन
त्वं चक्रिषे(?) जवनमण्डलचङ्क्रमान् खे ॥ 5

इन्द्रादिदैवतगणैर्गतनिर्मरत्वः
सर्वास्त्रमोचनपटुर्भृशयोगिभावम् ।
... ... (आस्थाय च) प्लवगनायकमन्त्रिकृत्य-
मातेनिषे पवनभूर्धिषणातिरेकात् ॥ 6

दौत्यं वहन् रघुपतेः, सरितामधीशं
निर्यत्नतः करधृतार्यजनाङ्गुलीयः ।
उल्लङ्घ्य कूपमिव मारुतपुत्र सीता–
शोकाटवीदहनतामुररीकरोषि ॥ 7

त्वं रामरामपदपङ्कजसक्तभृङ्गो
भक्त्यां रिपौ निशितधारिकभीमवज्रः ।
न्याये प्रजापतिमनोः सदृशः कपीशो
भक्तालिपालनविधौ हरिणा सकाशः ॥ 8

नम्रान् जनान् पृथुरिवोन्नमयन्नदेश-
स्त्वं वेतसान्मदकलान् पुषतोन्नमत्वम् (?) ।
उन्मूलयन् भुवनचारिभिरुष्यमाणः
संराजसे बहुलवेगनिषेव्यमाणः ॥ 9

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

अत्र प्रतापयशसी गतसूर्यरश्मौ

तूर्णं विसृष्त्य(?) [विसर्प्य] रविचन्द्रमसौ मदीयौ ।

वक्त्राब्जमानसचकोरशिशू प्रफुल्ल-

सन्तोषितौ कृतवते भवते नमामि ॥ (?)

चू० –

एवमीडमानेन सुखडौ(ढौ)किततनुवर्धनेन शेखरीभूत-हनुमदङ्घ्रिपल्लवतल्लजेन प्रह्वभावमवलम्बमानेन (भवानेव) मम शरणमिति जल्पता तेन नीलमेघेन पूजितोऽभूत्पवनभूः ॥

ततः

श्लो० –

नागलोकरजनीचरघातं

ब्रह्मणानुरजनी प्रविधातुम् ।

पार्षदश्चिरजनीत्थममानिः

स्त्रीसमष्टिरजनीतिरयं किम् ॥ 11

चू० –

चारयुवतिनिशमितकमितृमरणदुःखितचेतोभिः कुरर्यैव [कुरर्य इव] रुदन्तीभिः कश्मलव [भाव] मालभमानाभिः सपत्नीभिः संयतकण्ठ[ठा] निजान्तः पुरानि[न्नि] र्गमन्ती [?] शोकेन विलापमाचरन्ती पाणिकोणशातनितो[जो] रस्क-विस्कन्नहारमणिसङ्कुलतला रोचमानमारुतिप्रतापतपनकिरण-

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

पातेन जायमानोष्माणं भूप्रदेशं शिशिरीकर्तुमिव नयनयुगच्योतदुदकैर्वर्षर्तुश्रियमुत्पादयन्ती मुहुरधः पतनविलुलितचूर्णकुन्तलतया चक्रवात्याऽऽकुलीकृतवालपूलिका चमरमृगीव पर्यायनिबद्धपतनोत्थानश्रमाबोधतया सोन्मादेव कलहविलूनबलपललचर्वणगर्वायमाणगोमायुरुतद्विगुणितरोदननिनदपानीयैर्दिङ्मौनकक्ष्यां सङ्क्षालयन्ती मातङ्गी कुणपपतिमालिङ्ग्य नितरां न्दिदीये[1]

श्लो० –

मुखकमलमशोभमायताक्ष्या
नयनयुगालिनिकेतनान्तरालम् ।
पवनजविलसद्यशःशां [शशां] का-
दिव रुरुचे मुकुलीभवन्नराजन् ]?] [त्] ॥ 12

निराचिकीर्षुर्मातङ्ग्याः सान्त्ववादेन रोदनम् ।
रेणुसंवृतसर्वाङ्ग्या हरिश्चिन्नमुवाच ताम् ॥ 13

मातंगीं [ङ्गि] कालवशगान् सकलानवेहि
त्वं क्रन्दितुं किमुचिता रणवीरपत्नी ।
शक्तो निरस्तुमदितं [?] [मुदितं] विधिकल्पितं क-
स्तेनोर्ध्वदेहिक [नौर्ध्वदैहिक] विधिं कुरु शीघ्रमस्य ॥

1. दीङ् क्षये इति धातोः लिटि रूपमेतत् - रोदनार्थकम् ।

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

त्वं नीलमेवाय वितीर्य पुत्रां [पुत्रीं]
रमां सुकेशीमिव नीलकेशीम् ।
पट्टाभिषेके विनियुज्य बालं
चिरं वसेत्याज्ञिपदेष[1] वातिः [?] ॥ 15

पुरप्रवेशाय कृतोपकारं स्मरन्निवायं प्रतिकर्तुमिच्छुः ।
मत्स्याधिपायात्मजवत्सलत्वात् सैन्याधिपत्यं हनुमान्दिदेश ॥

कालीगृहं मणिभिरुज्वलमेत्य भक्तो
नालीकसंवृततलं रघुत्रयं, पेटीम् ।
आदाय मारुतभवः क्षणदावसाने
मोदाय भास्करभुवो द्रुतमाप लङ्काम् ॥ 17

स रामपिटकं हैमं घटितं रत्नसञ्चयैः ।
भास्वन्तमिव भास्वन्तं चिक्षेप कपिमध्यमे ॥ 18

चू० –

ततो जयश्रिया परिष्वज्यमानं ताळवृन्तेन वीज्यमानं मार्गश्रमकीलालकणकोरकितनिटिलभागं कौतुकवन्तं हनूमन्तं रघुपतिपिटकं च दृक्पथैः पिबन्तोऽवतरन्तः सन्तोषपयोधौ सुग्रीवविभीषणादयो हरयः कि[ल]किलरवकल्लोलैर्दिक्सीमरोधांसि विदलयाञ्चक्रुः ॥

---

1. चिरं वसेत्यन्वयुनक् स वातिः ॥ चिरं वसेत्यादिशदेष वातिः इति वा युज्यते ॥ आक्षिपत् इति चोदनार्थे वा ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

श्लो० –

लक्ष्मणेन युतं रामं पर्यंतृप्यं(न्) निशाम्य तौं (तम्) ।
लक्ष्मणेन युतं चन्द्रं चकोरा इव मर्कटाः ॥ 19

सन्तप्तप्रकोकनिकरां रजनीं विहाय
मो(मा)मेष्यतीव दिवसो दयितोऽयमत्य(द्य) ।
सर्वैर्द्विजैर्व्रतपरै रचितप्रणाम(मा)
सन्ध्या समेत्य हरितः समलञ्चकार ॥ 20

प्रभातदृष्टेदि(दि)वसस्य काचन
प्रभा समैक्षिष्ट मरुत्वतो दिशि ।
रामागमेनेव पुरं मुदं जुषो (षः)
यास्यास(सन्ध्या) तरुण्याः स्मितचन्द्रिका बभौ ॥ 21

मलयाद्रिनिविष्टचन्दनद्रुः
स्फुटसंपर्कमोनोज्ञगन्धनद्धः ।
निखिलैरभिनन्द्यमन्दिमा सन्
पवमानः कपिवाहिनीं सिषेवे ॥ 22

विपद्विसृष्टं मरुदात्मजेन
रामं दिदृक्षुर्निजवंशरत्नम् ।
विभाकरः किं किरणैरनेकैः
पूर्वाद्रिपीठादुदतिष्ठदेषः ॥ 23

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

दिवाकरः पादकवन्धपूरैः
संक्षालयामास तमोमलानि ।
शुद्धीचिकीर्षुः खमिवामराणा-
मागामिरक्षोवधवीक्षणाय ॥ 24

अन्तर्दधे तत्र निशाटमाया-
मञ्जूषिका सन्तमसेन साकम् ।
स्वप्नेन मुक्ताविव तौ [1]भवन्ता-
वुत्थाय देवाह्निकमादधाते ॥ 25

चू० –

अथ दशाननो रामागमकुतूहलजायमानैरुच्चैः कपिसिह्म-नादैरवेत्य मैरावणनिबर्हणं विहितमुद्दिश्य चिरं रुरोद ।

श्लो० –

युद्धायायातवन्तं मणिखचितरथे तस्थिवांसं कठोरं
रक्षोभिर्भीमकायैः प्रहरणत(ध)रणैरन्वितं...। (राक्षसेशम्)
हन्मि त्वां तिष्ठ तिष्ठेत्यसकृदपदरं त्वां वदन्तं मदेन
त्वं कृत्वा जन्यमेनं यमगृहमनयस्तत्क्षणादेव वीर्यात् ॥ 26

दिव्यं पुष्पकमास्थितो जनकजामङ्कस्थितां प्रीणयन्,
साकेतं विहितैर्वृतः प्रतिगतः क्षिप्रं प्रमोदस(दात्)ततः ।
नन्दिया[ग्रा]मनिवासिनं च भरतं सन्तोषयन्मास्स[सादरं]
त्वं राजन् वरमन्वभू रघुपते पट्टाभिषेकोत्सवम् ॥ 27

---

1. अगस्त्यवचनम् - भवन्तौ इति ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

यदुक्तं वायुपुत्रस्य समो नेति जगत्रये ।
तद्युक्तमेव युष्माभिरस्माकमपि सम्मतम् ॥ 28

यः पुमान् पठति भक्तिसंयुतो
यः शृणोति हनुमत्कथामिमाम् ।
बुद्धिधैर्यगुणवान् भवेद् ध्रुवं
स श्रियं च महतीमवाप्नुयात् ॥ 29

इत्यद्भुतं पवननन्दनसच्चरित्रं
रामाय विस्तरतरं भगवानगस्त्यः ।
स्पष्टं जगाद स निशम्य रघूत्तमस्त-
त्संमोदसागरनिमज्जनमाचकार ॥ 30

राजीवरम्यनिजपादसमीपगाय
भक्ताग्रियाय[ग्रगाय]नखकान्तिलसन्मुखाय ।
कण्ठादुदस्य मुदितो गतमूल्यमेनं
मुक्तासरं हनुमते रघुनायकोऽदात् ॥ 31

तपोधनानां महितो वरेण्यो
रामेण सम्यक् कृतपूजनोऽयम् ।
यथागतं शिष्यनिषेव्यमाण-
स्तस्यानुमत्या मुनिभिर्युतोऽगात् ॥ 32

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

सुग्रीवप्रमुखेषु तेषु बलिषु प्राप्तेषु सर्वेष्वथ
स्वस्वस्थानमदभ्रसंमदशुभैर्युङ्क्षु द्विषां ध्वंसतः ।
वज्रीव त्रिदशालयं धनपतिः शूरोऽलकापट्टणं
रामः पालयति स्म विष्टपमिदं जुष्टस्त्रिभिर्भ्रातृभिः ॥

... ... ... ... रघुपतेर्दूतोत्तमो नायको
(वीरश्रीपरिवेष्टितो रघुपतेर्दूतोत्तमो नायको)
मुख्यो वीररसो विशन्त्यवयवाः शृङ्गारहास्यादयः ।
वातापत्यचरित्ररत्नघटितं तं चम्पु (?) मुक्तासरं
रामायैष समर्पयामि मम हृत्सिह्मासनाध्यासिने ॥

श्रीरामः शरणं ममेति वदतां सम्पत्समृद्धिर्भवेत्
कुर्याद्वर्षगणैः परं जलधरः सम्पन्नसस्यां भुवम् ।
लोकाः सन्तु गतव्यथाः कुशलिनस्तन्वन्तु यागादिकाः(न्)
व्यसेयं(व्यासोऽयं)रघुनाथपण्डितकृतिर्जीयाज्जगत्यां
चिरम् ॥ 35

इति श्रीरघुनन्दन पदारविन्दकन्दलितसाहित्यसनाथेन रघुनाथेन विरचिते मारुतिविजयचम्पु(चम्पू) काव्ये **रामपट्टाभिषेको** नाम सप्तमः स्तबकः ॥

---

॥ मारुतिविजयचम्पुः(चम्पूः) समाप्तिमगमत् ॥

॥ हरिः ॐ ॥

लिखितं पुस्तकमिदं वामनाख्येन मौनिना ।
यदि शुद्धमशुद्धं वा विद्वद्भिः परिशोधयेत् ॥ (ध्यताम्) ॥

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy

# AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them will be Printed and Published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar-King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world-famous 'Sarasvati Mahal Library'. It is open to you to share the hononr of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up ? The Library waits for your answer.

**Director.**
Sarasvati Mahal Library, Thanjavur.

CC-0. Sarasvati Mahal Series. Digitized by Sri Muthulakshmi Research Academy